अतः शीघ्रं प्रकुर्व्वीत यदा दोषसमुद्भवः ।
तदैव परिहर्त्तव्यइत्याह भगवान् यमः ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये सुरापायि-
पत्नीपुत्रादीनां संसर्गप्रायश्चित्तम् ।

---

## अथ स्तेयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

समक्षं वा परोक्षं वा बलाच्चौर्येण वा पुनः ।
योऽन्यस्य हरते वित्तं तमाहुस्तेयिनं बुधाः ॥
पारक्यं यत्सुवर्णं तन्महापापसमुद्भवम् ।
तद्धृत्वा ब्राह्मणोयस्तु महापातकिनां वरः ॥
सुवर्णं रजतं ताम्रं पारक्यं योहरेद्द्विजः ।
स याति नरकं घोरं पुनरावृत्तिवर्जितम् ॥

सुवर्णप्रमाणमाह रजतताम्रकांस्यवस्त्रादीनाञ्च ।

स्कन्दपुराणे—

सुवर्णस्य प्रमाणञ्च मन्वाद्यैः परिकल्पितम् ॥
वक्ष्ये शृणुध्वं विप्रेन्द्राः प्रायश्चित्तस्य साधनम् ।
गवाक्षगतमार्तण्डरश्मिमध्ये प्रदृश्यते ॥
त्रसरेणुप्रमाणन्तु रजस्तूच्यते बुधैः ।
त्रसरेण्वष्टकं लिक्षं तत्त्रयं राजसर्षपम् ॥
सर्षपाणामष्टकञ्च तत्त्रयं ? यवमुच्यते ।
यवत्रयं कृष्णलं स्यात् माषः स्यात् तस्य पञ्चकम्[1] ॥

---

(१) क्वचित्पुस्तकेषु अतः परं—

तद्द्वयं कृष्णलं प्रोक्तं तत्सुवर्णं तदुच्यते ।
तदर्धं माष इत्युक्तं मुनिभिर्ब्रह्मवादिभिः ॥

( तद्वयं रूपकं प्रोक्तं मुनिभिर्ब्रह्मवादिभिः ) ।
माषषोड़शमानन्तु सुवर्णमिति कथ्यते ॥
पलं सुवर्णाश्चत्वारस्तच्चत्वारि ध्रुवोभवेत् ।
चत्वारिंशद्ध्रुवाणान्तु भारस्त्वुच्यते बुधैः ॥
सुवर्णेन यथाक्रीतं रजतं धर्म्ममागतः ।
यावान् रजतराशिश्च तद्राजतमुदाहृतम् ॥
हृत्वा ब्रह्मस्वमज्ञात्वा द्वादशाब्दन्तु पूर्व्ववत् ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतञ्चरेत् ॥
गुरूणां चैव कर्त्तृणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
दग्ध्वाऽऽत्मदेहं देहे च सम्पूर्णं तर्पयेद्घृतम् ।
कारीषा'ग्न्यादितो दग्धःस्तेयदोषात् प्रमुच्यते ॥

( ब्रह्माण्डपुराणे )

अज्ञानाद्ब्राह्मणं हृत्वा ब्रह्मस्वमथवा द्विज ।
कपालध्वजहीनन्तु ब्रह्महत्याव्रतं चरेत् ॥
दग्ध्वा'त्मदेहं देहे च संपूर्णं लेपयेद् घृतम् ।
कारीषभारतोदग्धः स्तेयपापात् प्रमुच्यते ॥

---

(—) चन्दयोरेतयोरन्तर्गतः पाठः केषुचित्पुस्तके नोपलभ्यते ।
(१) कारीषभारतो दग्ध इति श्रीतपुस्तके पाठः ।
(—) अयं पाठः श्रीतपुस्तके नोपलभ्यते ॥
(२) गात्मलदेहइति केषुचित्पुस्तकपाठः ।

यद्यांसे मुसलं धृत्वा विकीर्य्याऽऽत्मशिरोरुहान् ।
गत्वा राजानमाचक्षेत् तं हन्यान्मुसलेन सकृत् ॥
मृतः शुद्धिमवाप्नोति नान्यथा शुद्धिरिष्यते ।

तदाह आपस्तम्बः

"स्तेनः प्रकीर्य्यकेशः अंसे मुसलमाधाय राजानं गत्वा कर्म्माचक्षीत । तेन एनं हन्यात् वधे मोक्षः ।" (आ·सू 1–9–25–4)

अल्पसुवर्णापहारप्रायश्चित्तमाह—

गुरूणां यज्ञकर्तॄणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु हृत्वा हेम कथं भवेत् ॥
अज्ञत्वं यस्तु हृत्वा च पश्चात्तापमवाप्य च ।
पुनर्धृत्वा[1] तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥
तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः ।
शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितो भवेत् ॥
त्रसरेणुसमं हेम हृत्वा कुर्य्यात् समाहितम् ।
प्राणायामद्वयं सम्यक् तेन शुध्यति वत्सरात् ॥
प्राणायामद्वयं कृत्वा हृत्वा सर्षप[2]मात्रकम् ।
प्राणायामाश्च चत्वारो राजसर्षपमानतः ॥
गौरसर्षप[3]मानन्तु हृत्वा स्वर्णं विचक्षणैः ।
स्नात्वा च विधिवत् कार्य्यं गायत्र्यष्टसहस्रकम् ॥

---

(1) पुनर्हृत्वा तु विप्रेभ्य इति कीतपुस्तकपाठः ॥
(2) सर्षपमानकमिति केचित्पुस्तकपाठः ।
(3) गौरसर्षपमानन्तु इति केचित्पुस्तकपाठः ॥

यवमात्रसुवर्णस्य स्तेयकर्त्ता जपेद्विजः।
आसायं प्रातरारभ्य गायत्रीं वेदमातरम्॥
हेम्नः कृष्णलमात्रस्य हृत्वा सान्तपनं चरेत्।
माषत्रयेण हेम्नस्तु प्रायश्चित्तन्तु कथ्यते॥
गोमूत्रपक्वयवभुग् देवार्च्चनपरायणः।
मासत्रयेण शुद्धः स्यान्नारायणपरायणः॥
माषमात्रसुवर्णस्य स्तेयं कृत्वा प्रमादतः।
जपेद्वै लक्षगायत्रीमन्यथा दोषमश्नुते॥
निष्कमात्रसुवर्णस्य हरणे विप्रसत्तमाः।
ब्रह्महत्याव्रतं कृत्वा षडब्दं शुद्धिमाप्नुयात्॥
किञ्चिन्न्यूनं सुवर्णस्य स्तेयं मुनिवरोत्तमाः॥
गोमूत्रपक्वयवभुग् षड्ब्दैर्भैकेन शुध्यति।
सम्पूर्णस्य सुवर्णस्य स्तेयं कृत्वा मुनीश्वराः॥
ब्रह्महत्याव्रतं कुर्य्याद्द्वादशाब्दं समाहितः।
रत्नासनमनुष्यस्त्रीभूमिधेन्वादिकेषु च॥
सुवर्णसदृशेष्वेषु प्रायश्चित्तार्द्धमुच्यते।

मार्कण्डेय पुराणे--

विप्रस्वहरणे क्षत्रियादीनां प्रायश्चित्तं विशिनष्टि॥

(१) कुर्य्यादिति श्रौतपुस्तके पाठः।

(२) षड्वेकेनैव शुध्यति इति वेष्णितपुस्तके, षरेकेनैव शुध्यति इति श्रौत पुस्तके पाठः समुपलभ्यते।

(३) प्रायश्चित्तार्द्धमुच्यते इति श्रौतवेष्णितपुस्तकयोः पाठः।

( स्तेयं कृत्वा सुरां पीत्वा राजा योऽधर्मवत्सलः )
विप्रस्वहरणे राजा स्वर्णमानमथाधिकम् ।
कृत्वा नरकमाप्नोति ब्रह्महेति वदन् द्विजाः ॥
पश्चात्तापसमायुक्तो ब्रह्महत्याव्रतं चरेत् ।
तेभ्यश्चदत्त्वा तद्धेम पश्चाच्चान्द्रायणद्वयम् ॥
कृत्वा शुद्धिमवाप्नोति नान्यथा जनवल्लभ ।

कूर्म्मपुराणे—

अज्ञानाद्ब्राह्मणो हृत्वा विप्राणां स्वर्णमुत्तमम् ॥
गुरूणां यज्ञकर्तॄणां धर्म्मिष्ठानां तथैव च ।
श्रोत्रियाणां द्विजानान्तु विधवानां विशेषतः[1] ॥
पूर्व्ववद् [2]घृतलिप्ताङ्गः कुर्व्वन् सर्व्वावलोकनम् ।
करीषाच्छादितो दग्धः स्तेयपापात्प्रमुच्यते ॥

लिङ्गपुराणे—

ब्रह्मस्वं क्षत्रियो हृत्वा अश्वमेधेन शुध्यति ।
आत्मतुल्यं सुवर्णं वा दद्याद्वा गोसमं तथा[3] ॥
ब्रह्मस्वं क्षत्रियो हृत्वा पश्चात्तापमवाप्य च ।
पुनर्दत्त्वा तु विप्रेभ्यः प्रायश्चित्तविधिः कथम् ॥

---

(—) अयं पाठः मौलपुस्तके नोपलब्धः ।
(१) वैष्णवानां विशेषतः इति मौलपुस्तके पाठः ।
(२) पूर्व्वाहूतवस्त्राणां इति मौलपुस्तके पाठः ।
(३) चरेत् इति लेखितपुस्तके पाठः ।

तत्र सान्तपनं कृत्वा द्वादशाहोपवासतः।

शुद्धिमाप्नोति विप्रेन्द्रा अन्यथा पतितो भवेत्।

पुनरपि राज्ञां स्तेयप्रकारमाह—

शिवरहस्ये—

अन्यायाद्विप्रग्रामेषु धनाढ्येभ्यो धनं च यत्।

अदण्ड्येभ्यो यथा वित्तं तत् स्तेयं भूभुजामिह॥

तदपि स्तेयमित्युक्तं पूर्व्ववच्छुद्धिमाप्नुयात्।

सुरामपि तथा राजा पीत्वा ज्ञानात् क्वचिद्द्विजाः॥

अग्निदग्धां सुरां पीत्वा राजा मृत्वा ततः शुचिः।

तथापि विप्रमुख्यानां ह्ययुतं धेनुमाचरेत्॥

स्तेयं कृत्वा सुरां पीत्वा मृत्वा राजा विशुध्यति।

द्विजेभ्यो ह्ययुतं धेनुमिति यत्तदसाम्प्रतम्॥

वर्णचतुष्टयानां नारीणां मद्यपानसम्भवे, न मरणान्तम्। त्याग एव परम्। न पोषणो[1]पायः। क्षत्रिय[2]शूद्रस्त्रीणां केचिदिदमिच्छन्ति। सुवर्णस्तेयेऽपि एवमेव वेदितव्यम्।

तदाह कात्यायनः—

विप्रादीनां तु नारीणां स्तेयं वा पापमेव वा।

सम्भवेद् यदि दैवेन नेच्छन्ति मरणं बुधाः॥

---

(१) न पोषणेऽपाय इति क्रीतपुस्तके पाठः।

(२) क्षत्रियशूद्राणामिति क्रीतपुस्तके पाठः॥

न त्याज्यास्तु स्त्रियः काश्चिन्नोपोष्या वेसुभिः किल ।
क्षत्रियादेर्वधः प्रोक्तो विप्राणां गर्हितं स्मृतम् ॥

लिङ्गपुराणे—

सुरापानं वणिक् कृत्वा सुवर्णं वा द्विजन्मनाम् ।
क्षत्रव(1)च्छुद्धिमाप्नोति शूद्रोमौसल्यमर्हति ॥

स्कान्दपुराणे—

सुरां पीत्वा सुवर्णं वा हृत्वा यदि वणिक्पतिः ।
राजवच्छुद्धिमाप्नोति ह्ययुतं वा गवां चरेत् ॥

नागरखण्डे—

ऊरुजस्तु सुरां पीत्वा हृत्वा स्वर्णं द्विजन्मनाम् ।
क्षत्रवद्देहशुद्धिः स्याद् अन्यथा ह्ययुतं गवाम् ॥
तच्छूद्रस्तु सुरां पीत्वा हृत्वा हेम द्विजन्मनाम् ।
राजदण्डः स्वधर्मेण मुसलेन हतः शुचिः ॥

स्कान्दपुराणे—

पादजस्तु यदा हृत्वा सुवर्णं पूर्व्वजन्मनाम् ।
सुरां पीत्वा प्रज्ञाज्ज्ञात्वा (2)मौसल्यं वधमर्हति ॥

---

(1) क्षत्रियवच्छुद्धिमाप्नोति इति श्रीतर्केषितपुस्तकयोः पाठः ।

(2) मौसल्यवध इष्यते इति श्रीतर्केषितपुस्तकयोः पाठः ।

विष्णु*धर्म्मोत्तरे—

क्षत्रियो हेमहारी[1] चः सुरापायी[2] द्विजन्मनाम्।
तत्स्त्रीणां त्यागएव स्यात् सोऽपि मौसल्य मर्हति॥

राजविजये—

पादजो यदि मोहाद्वा सुरां पीत्वा द्विजन्मनाम्।
हृत्वा हेम कथं तस्य राज्ञा[3] मौसल्यमिष्यते॥
तत्स्त्रीणां त्यागएव स्यात् ध्वजो वा मुनिचोदितः।

इति हेमाद्रौ क्षत्रियादीनां विप्रस्वहरणे
प्रायश्चित्तम्।

---

* विष्णुपुराणे इति मौलपुस्तके पाठः।
(१) हेमहृत्वा च इति मौलवेष्टितपुस्तकपाठः।
(२) सुरां पीत्वा इति मौलपुस्तके पाठः।
(३) राजा मौसल्यमिष्यते इति मौलपुस्तकपाठः।

## अथ रजतादिस्तेयप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सुवर्णेन प्रमाणेन ज्ञात्वा यद्राजतं भवेत् ।
तावद्धृत्वा द्विजो यस्तु स्तेयी इत्युच्यते बुधैः ॥

स्कन्दपुराणे—

राजतं येन त[1]द्धित्तं पूर्व्वमानेन धर्म्मतः ।
तद्धृत्वा मुखजः सम्यग् अज्ञानाद्रा[2]जनन्दन ॥
स्तेयी इत्युच्यते सद्भिः प्रायश्चित्ती भवेद् द्विजः ।

चतुर्व्विंशतिमते

हरेद्रजतमज्ञानात्[3] पूर्व्वजो यदि दैवतः ।
स कृत्वा पूर्व्ववद्राजन् शुचिमाप्नोति निश्चितम् ।

महानारदीये

सुवर्णमानानन्यस्मिन् रजतस्तेयकर्म्मणि ।
कुर्य्यात् सान्तपनं सम्यग् अन्यथा पतितो भवेत् ॥
दशनिष्कान्तपर्य्यन्तमूर्द्धं निष्कचतुष्टयात् ।
हरेच्चेद्रजतं[4] विद्वान् कुर्य्याच्चान्द्रायणं द्विजाः ॥
दशादिशतनिष्कान्तरजतस्तेयकर्म्मणि ।
चान्द्रायणद्वयं प्रोक्तं तत्पापपरिशोधकम् ॥

---

(१) येन यत् क्रीतमिति केचित्पुस्तके पाठः ।

(२) राजतं हरेदिति क्वचित्पुस्तके पाठः ॥

(३) अज्ञानाद्राजतं हृत्वा इति क्वचित्केचित्पुस्तकयोः पाठः ।

(४) हृत्वा चेद्रजतं इति क्वचित्केचित्पुस्तकयोः पाठः ॥

शतादूर्द्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम्।
सहस्रादधिके स्तेये ब्रह्महत्याव्रतं चरेत्॥

स्कन्दपुराणे—

सुवर्णादधिकस्तेये रजतस्य विशांपते।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत्॥
दशनिष्कान्तपर्य्यन्तमूर्द्ध्वं निष्कचतुष्टयात्।

स्कन्दपुराणे—

सुवर्णादधिकस्तेये रजतस्य विशांपते।
कुर्य्यात् सान्तपनं सम्यक् अन्यथा दोषभाग् भवेत्॥
दशनिष्कान्तपर्य्यन्तमूर्द्ध्वं निष्कचतुष्टयात्।
हृत्वा चेद्रजतं विद्वान् कुर्य्याच्चान्द्रायणं द्विजः[1]॥
शतादूर्द्ध्वं सहस्रान्तं प्रोक्तं चान्द्रायणत्रयम्।
सहस्रादधिकस्तेये ब्रह्महत्याव्रतं चरेत्॥

क्षत्रियविशां रजतस्तेये विप्रप्रायश्चित्ताद्द्विगुणं वेदितव्यम्। शूद्रस्य मौसल्यमेव। तत्तत्स्त्रीणां रजतादिस्तेयसम्भवे [2]त्यागः पूर्व्ववन्न मरणादि।

इति हेमाद्रौ रजतस्तेयप्रायश्चित्तम्।

---

(१) शुभमिति केषुचित्पुस्तके पाठः।
(२) त्याज्या इति मीत केषुचित्पुस्तकयोः पाठः।

## अथ ताम्रस्तेयप्रायश्चित्तमाह ।

स्कन्दपुराणे—

( हृत्वा विप्रः [1]पलशतं ताम्रं पारक्यमादरात् ।
स्तेयी इत्युच्यते सद्भिर्न सम्भाष्यः कदाचन ॥
पलप्रमाणं पूर्व्वमुक्तं )
सुवर्णो लोभत स्ताम्रं पारक्यं वै शतं पलम् ।
स्तेयी महद्भिर्गदितस्तस्य नास्तीह निष्कृतिः ॥

गरुड़पुराणे—

अनाथानाञ्च नारीणां विधवानां द्विजन्मनाम् ।
गुरूणां कर्म्मनिष्ठानां साधूनां ताम्रमादरात्
स्तेयेन वा बलात्कारात् विप्रोहृत्वा शतं पलम् ।
न तस्य निष्कृतिर्नास्तिमरणान्तवधादिह ॥
पलद्वये पञ्चगव्यं पीत्वा शुद्धिमवाप्नुयात् ।
प्राजापत्यं पञ्चपले तप्तं दशपले स्मृतम्[2] ॥
त्रिंशत्पलेतु चान्द्रं स्यात् पञ्चाशत्तवयं स्मृतम् ।
ताम्रे षष्टिपले प्रोक्तं मासं जप्त्वाघमर्षणम् ॥
कण्ठदघ्नजले स्थित्वा शुद्धिमाप्नोति पूर्व्वजः ।
ताम्रे शतपले राजन् स्तेयं कृत्वा तु पूर्व्वजः ॥

---

(१) विष्णुपुराणे इति केषाञ्चित्पुस्तके पाठः ।
(—) अयं पाठः क्रीतपुस्तके नोपलभ्यते ।
(२) पञ्चशतमिति केषाञ्चित्पुस्तके पाठः ।
(३) प्राजापत्यं पञ्चगव्यं तप्तं दशपले स्मृतम । इति क्रीतपुस्तके पाठः ।

चि: परिक्रमणं[1] कुर्य्याद् [2]भुवचान्द्रं ततः परम् ।
हृत्वा शतपलं ताम्रं स्वर्णस्तेयसमं विदुः ॥

शतपलताम्रस्तेयात् द्विजः सुवर्णस्तेयवत् प्रायश्चित्तं कुर्य्यात् । नात्र मरणान्तं प्रायश्चित्तम् । सुवर्णस्तेयसममित्युक्तम् अतो न मरणान्तप्रायश्चित्तम् । अयुतधेनुदानादिकमेव [3]क्षत्रियादिस्तेय प्रायश्चित्तम् । एवं न सुवर्णस्तेयादिवत् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
ताम्रस्तेयप्रायश्चित्तम् ।

(१) कत्वा इति कोतपुस्तके पाठः ।
(२) छक्का इति क्रीतपुस्तके पाठः ।
(३) क्षत्रियादेस्तेयप्रायश्चित्तमिति क्रीतपुस्तके पाठः ।

## अथ कांस्यस्तेयप्रायश्चित्तमाह ।

( कूर्मपुराणे—

'कांस्यं यत्पापसम्भूतं पारक्यं यदि लोभतः ।

स्तेयं कृत्वा द्विजोयस्तु स पापफलमश्नुते ॥ )

लिङ्गपुराणे—

कांस्यस्तेयी महापापी रौरवं नरकं व्रजेत् ।

पश्चाद्भवति पापात्मा कासकी जायते भुवि ॥

महाभारते—

कांस्यं हृत्वाद्विजो लोभात् पारक्यं द्विजहेतुकम् ।

महान्तं नरकं गत्वा हीनवर्णः प्रजायते ॥

चतुर्विंशतिमते—

कांस्यपित्तलमुख्येषु आयसान्तेषु पञ्चसु ।

सहस्रनिष्कमाने तु पारक्यं परिकीर्त्तितम् ॥

प्रायश्चित्तन्तु लोहानां स्तेये रजतवत्स्मृतम् ॥

कांस्यपित्तलस्तेये वर्णत्रयस्य रजतस्तेयवत् प्रायश्चित्तम् पलसंख्यया

---

(—) अयं पाठः क्रीतकाशीपुस्तकयो र्न दृश्यते ।

(१) काशीपुस्तक क्रीतपुस्तकयोः ' स्कन्दपुराणे ।

सुवर्णो लोभसन्नद्धः पारक्यं वै परं ततः ।

स्तेयं कृत्वा द्विजोयस्तु सपापफलमश्नुते"

इत्यधिकपाठः समुपलभ्यते ।

वेदितव्यम् । न निष्कादिप्रमाणम् । शूद्रस्य 'राजत'लघुगुरुक्रमेण अङ्गुलिच्छेदादिकं कारयितव्यं न मौल्यम् । द्रव्यस्याल्पत्वात् । तत्क्षीणामिवमेव सम्भवे प्रायश्चित्तं करणीयम् ।

इति हेमाद्रौ प्रायश्चित्ताध्याये कांस्यस्तेयादि-
प्रायश्चित्तम् ।

---

(१) शूद्रस्येति श्रीतर्कचिह्नितपुस्तकयोर्नोपलभ्यते ।

(२) लघुक्रमेण इति श्रीतर्कचिह्नितपुस्तकपाठः ।

## अथ धान्यस्तेयप्रायश्चित्तमाह ।

मरीचिः—

ब्राह्मणो द्रव्यलोभेन पारक्यं धान्यमाहरेत् ।
द्रोणं वा प्रस्थमात्रं वा हृत्वा नरकमश्नुते ॥

लिङ्गपुराणे—

मुषित्वा योद्विजोमोहाद्धान्यं द्रोणप्रमाणकम्
पारक्यं धन्यमतुलं हृत्वा तु नरकं व्रजेत् ॥
तदन्ते भुवमासाद्य सदने मूषको भवेत् ।

धान्यप्रमाणमाह—

कूर्मपुराणे—

पुराणं षष्टिभिर्वीजैस्तद्वयं कोशउच्यते ॥
कोशद्वयन्तु लिङ्गं स्यात् प्रसत्तद्वयमुच्यते ।
अञ्जलिस्तद्द्वयं राजन् तद्द्वयं[1] कुडुपं स्मृतम् ॥
[2]कुडुपद्वयं तु प्रस्थं स्यात् द्रोणस्तेषां चतुष्टयम् ।
द्रोणानां विंशतिः खारी धान्यमानमितीरितम् ॥
द्रोणद्वयं तु भारःस्यात् ज्ञेयस्तत्पलसङ्ख्यया ।
कोशस्तेये[3] दश प्रोक्तं सावित्रीपठनं मुदा ॥

---

(१) तद्द्वयं पुरुषं स्मृतम् इति श्रौतपुस्तके पाठः ।

(२) मानद्वयं तु यद्भूतं तद्द्वयं कुडुपं स्मृत मित्यधिकमर्द्धमितः पूर्वं श्रौत-लेखितपुस्तकयोः समुपलभ्यम् ।

(३) आपस्तोमेदश प्रोक्तामिति लेखितपुस्तकपाठः ।

चञ्चलो शतगायत्रीजपः पापप्रणाशनः ।
सहस्रं पुरुषे प्रोक्तं मानी ह्ययुतमुच्यते ॥
लक्षं तु कुड़पे प्रोक्तं प्रस्थे लक्षद्वयं चरेत् ।
द्रोणे तु दशलक्षं स्यात् खारीधान्ये यथा शृणु ।
सुवर्णस्तेयिनः पापे प्रायश्चित्तं द्विजैर्मुदा[1] ॥
तत्तदाचरणीयं स्याद् अन्यथा पतितो भवेत् ।
गोधूमतिलमाषाणां स्तेयेन[2] द्विगुणं स्मृतम् ॥
श्यामाकमुद्गव्रीहीणां प्रमाणानां तथैव च ॥
[3]पावतालकुलित्थानां [4]यवपूर्व्वं समाचरेत् ।
ब्राह्मणोयदि लोभेन शोषयेत् खारिकाद्वयम् ॥
घृताक्तदेहः सहसा कारीषेण सहाग्निना ।
दग्धः शुद्धिमवाप्नोति नान्यथा गतिरिष्यते ॥

राजवैश्ययोरेवं प्रायश्चित्तं धान्यस्तेये विवेचनीयम् । शूद्राणां मौसलप्रायश्चित्तम् । राजवैश्ययोर्विवाहादिषु संस्कारबलवत्तया विप्रप्रायश्चित्तवदुक्तम् ।

इति हैमाद्रौ धर्म्मशास्त्रे धान्यस्तेयप्रायश्चित्तम्।

---

(१) द्विजैस्तदा इति क्रीतपुस्तके पाठः ।
(२) स्तेयिनोद्विगुणं स्मृतमिति क्रीतपुस्तकपाठः ।
(३) यावनालकुलित्थानामिति लेखितपुस्तकपाठः ।
(४) यावपूर्व्वमथाचरेत् इति लेखितपुस्तकपाठः ।

## अथ वस्त्रस्तेयप्रायश्चित्तमाह ।

स्कान्दपुराणे—

वस्त्रं मुष्णाति यो विप्रः पारक्यं शास्त्रगर्हितम् ।
अज्ञानाज्ज्ञानतो वापि तस्य दोषो महान् [1]भवेत् ॥

कूर्म्मपुराणे—

विप्रो यदि तु पारक्यं वस्त्रमज्ञानतः खलः ।
तदा दोषमवाप्नोति तं त्यजेदन्त्यजं यथा ॥

शिवपुराणे—

यो विप्रो दुर्जनासक्तो परवस्त्रं मुषेद्यदि ।
तस्यैवं पुण्यनाशः स्याद् इति शास्त्रेषु निश्चितम् ॥
तदन्ते नरकं याति जायते वस्त्रहीनवान् ।

कूर्म्मपुराणे—

विप्रो मुष्णाति यद्वस्त्रं पारक्यं धर्म्मगर्हितम् ।
यमलोकमुपागम्य तत्र स्थित्वाऽन्यजन्मनि ॥
पुनर्भुवमुपागम्य बहुपुत्रो विवस्त्रवान् ।

प्रायश्चित्तमाह देवस्वामी—

स्थूलतन्तुजातं वस्त्रं सूक्ष्मतन्तुविनिर्म्मितम् ॥
चित्रवस्त्रं तथा नीलं रक्तं कौसुम्भ[2]रञ्जितम् ।
पट्टवस्त्रं तु कौशेयं अर्णासयमतः परम् ॥

---

(१) महानभूत् इति कीतवेश्चितपुस्तकपाठः ।

(२) रञ्जनमिति वेश्चितपुस्तके पाठः ।

क्षौतवस्त्रमिति प्रोक्तं तत्तद्वस्त्रानुसारिणि।
स्थूलतन्तुकृते वस्त्रे स्तेयं कृत्वा तु पूर्व्वजः॥*
पश्चात्तापसमायुक्तः प्राजापत्यं समाचरेत्[1]।
[सूक्ष्मतन्तुकृते वस्त्रे तु मुषित्वा तप्तकृच्छ्रद्वयं चरेत्॥]
नीलीमये सूक्ष्मवस्त्रे चरेच्चान्द्रायणत्रयम्।
बहुमूल्ये रत्नवस्त्रे कौषेये च मुनीश्वराः॥
सद्यः पतति पापात्मा हृतात्तोऽस्मिं विशेषतः।
सुवर्णस्तेयिनं प्राहुः तं मौसल्यं विदुर्बुधाः॥
नान्यथा गतिरस्तीह तस्य भूयिष्ठपापिनः।
पुनर्दत्त्वा तु तद्वस्त्रं पश्चात्तापसमन्वितः॥
प्राजापत्यत्रयं कृत्वा शुचिमाप्नोति पूर्व्वजः।
उक्तं यथा क्षत्रियाणां तथा सर्व्वं समाचरेत्॥
तथा विप्रादिदाराणां वस्त्रतोये यथाक्रमम्।

विप्राणां यत् प्रायश्चित्तं उक्तं तदर्द्धं तद्दारक्षत्रियादीनाम्। तद्दाराणामेवं प्रायश्चित्तार्द्धक्रमेण योजनीयम्।

इति हेमाद्रौ धर्म्मशास्त्रे प्रायश्चित्ताध्याये
वस्त्रस्तेयप्रायश्चित्तम्।

---

* अतःपरम् "शुद्धेन मनसा राजन् तप्तकृच्छ्रद्वयं चरेत्" इत्यधिकः पाठः क्षौतपुस्तके समुपलभ्यते।

(१) पश्चाताप इत्याद्यर्द्धं क्षौतपुस्तके नोपलभ्यते।

[—] अयं पाठः क्षौतकाशीपुस्तकयोर्नोपलभ्यते।

## अथ गुरुतल्पगमनप्रायश्चित्तमाह ।

स्कन्दपुराणे—

गुरुतल्पगतानां तु प्रायश्चित्तमिहोच्यते ।
जननी च सपत्नी च राज्ञः[1] पत्नी गुरोस्तथा ॥
मातुलानी स्वभगिनी स्वसा ज्येष्ठस्य नायिका ।
श्वश्रूः कनिष्ठभार्य्या च मामेयी च पतिव्रता ॥
एकादश समाख्येताः स्वमात्रा राजवल्लभा ।
पूज्याश्च वन्दनीयाश्च पोष्या वस्त्रादिभूषणैः ॥
द्विजोऽपि न द्रोहकृत् स्यात्कर्मणा मनसा गिरा ।
जननी सर्व्वभूतानां पूज्या वन्द्याश्च तास्तथा ॥
अज्ञानान्मातरं गत्वा तत्सपत्नीमथापि वा ।
स्वयमेव स्वमुष्कं तु च्छिन्द्यात् पापमुदीरयन्[2] ॥
हस्ते गृहीत्वा तन्मुष्कं निर्गच्छेन्निर्ऋतिं दिशम् ।
गच्छेदेवाग्रतः स्वस्य कदाचिन्न विचारयेत्[3] ॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य[4] शुध्यति ।
भैरवप्रपतनं[5] वापि कुर्य्यात् पापमुदीरयन् ।

---

(१) राजपत्नी इति क्वातवेङ्कितपुस्तकयोः पाठः ।
(२) पापमुदीरयेत् इति क्वीतवेङ्कितपुस्तकयोः पाठः ।
(३) विचारयन् इति क्वीत वेङ्कितपुस्तकपाठः ।
(४) यत्र शुध्यति इति वेङ्कितपुस्तके पाठः ।
(५) मरुत्प्रपतनं इति वेङ्कितपुस्तकपाठः ।

भविष्योत्तरे—

राज्य[1] क्षोभे महातीर्थे संग्रामे देशविप्लवे ॥
पत्नीष्वन्यासु नारीषु स्थितासु मोह[2]पीड़ितः ।
मातरं वा सपत्नीं वा स्वदारभ्रान्तिमाविशन् ॥
पश्चाज्ज्ञात्वा तु मातेति पश्चात्तापमुपाविशन् ।
स्वयमेवासिना मुष्कं छित्वा पापमुदाहरन् ॥
अपश्यन् पृष्ठतो गच्छेत् प्राणान्तं प्राप्य शुध्यति ।
रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि[3] ॥
ब्रह्महत्याव्रतं कुर्य्याद् रेतः[4]सेकाऽग्निदाहनम् ।
ज्वलितां सूर्म्मिमालिङ्ग्य मृतः शुद्धिमवाप्नुयात् ॥

ब्रह्माण्डपुराणे—

महातीर्थेषु संग्रामे जनक्षोभे महाभये ।
[नव राजन् सतीसङ्गे महानसि समुद्भवे ॥]
कामातुरः स्वपत्नीति मातरं वापि पत्नजाम् ।
गत्वा सकृत्स्वदारेषु पूर्व्वचिह्नविवर्ज्जिताम् ॥
मातरं सहसा बुद्ध्वा पश्चात्तापपरायणः ।
असिना तीक्ष्णधारेण शिश्नं स वृषणं सकृत् ॥

---

(१) पुरक्षोभ इति क्रीतपुस्तकपाठः ।
(२) स्मरपीड़ित इति वेङ्कितपुस्तकपाठः ।
(३) मातरं इति क्रीतवेङ्कितपुस्तकपाठः ।
(४) रेतःसिक्तोऽग्निदाहनम् इति क्रीतवेङ्कितपुस्तकपाठः ।
[--] चर्य पाठः क्रीतपुस्तके नोपलभ्यते ।

छित्वाञ्जली समाधाय न पश्चादवलोकयन् ।
स्मरन् नारायणं सम्यक् पुरःस्वमविचारयन् ।
निर्ऋतिं दिशमागच्छेत् मृत्वा शुद्धिमवाप्नुयात् ॥
रेतःसेकात् पूर्व्वमेव स्वमातेति प्रबोधयत् ।
ब्रह्महत्याव्रतं कुर्य्यात् कपालध्वजवर्ज्जितम् ॥
कारीषवह्निना दग्धः शुद्धिमाप्नोति मातृगः ।

मरणादित्यर्थः ।

## अथ राजदण्डमाह ।

लिङ्गपुराणे—

विचार्य्य ब्राह्मणं विप्रं स्वयमेव न चारतः ।

न चारेभ्य इत्यर्थः ।

भगाकारमयः कृत्वा तापयित्वा हुताशने ।
लेखयेद्भग¹मङ्कं तु ललाटे ब्राह्मणगामिनः ॥
आरोपेद्रासभं यानं निःक्षाणं ध्वनयन् जनैः ।
तद्दत्तं पूर्व्ववत्कृत्वा धर्म्मव्रतमिहाचरेत् ॥
[तत्पत्नीष्वथवा दद्यात् तासु दोषो न संस्पृशेत्] ।
घटित्वा नगरीं सर्व्वां जनोऽयं गुरुतल्पगः ॥
इत्युच्चैर्भाषयन् भृत्यैः पुरद्वारमुपागमन् ।
तत्रैव नापितेनाशु असिना तीक्ष्णधारया ॥
छेदयित्वाथ तन्मुष्कं निधायाथ तदञ्जलौ ।
कृत्वा स पापो मुष्कं तत् गृहीत्वा निर्ऋतिं दिशम् ॥
गच्छन् प्राणान् ²परित्यज्य ततः शुद्धिमवाप्नुयात् ।
अथवा सूर्म्मिमातप्य वह्नौ राजा प्रयत्नतः ।
तैलेन सूर्म्मिमातप्य भृत्यैरालिङ्गयेन्मुदा ॥
मृत्वा शुद्धिमवाप्नोति स राजा दोषवानपि ।
भैरवप्रपतनं वापि नान्यथा शुद्धिरिष्यते ॥

---

(१) लेखयेद्भगलक्षणम् इति क्रोतबेखितपुस्तकपाठः ।

[—] अयं पाठः काशीपुस्तके नोपलभ्यते ।

(२) परित्यक्ता इति क्रोतबेखितपुस्तकयोः पाठः ।

रेतः सेकात्पूर्व्वं मातेति ज्ञात्वा ब्रह्महत्याव्रतं कपालध्वजवर्ज्जितं कृत्वा शुद्धिमवाप्नोति । नाम्यैः सेतुदर्शनादिभिः । क्षत्रियादीनां मातृगमनेऽप्येवमेव प्रायश्चित्तं योजनीयम् । शूद्रस्य मौसल्यमेव प्रायश्चित्तं पापनाशकं स्यात् । तस्याः स्त्रियास्तदर्श्वादि । सारमात्रत्यात्मकुटीरं कृत्वा मातरमवस्थाप्य मयूराण्डप्रमाणैः कवलैः प्रत्यहं पोषयेत् । न मातृभ्रान्तिः । मृता चेत् पतितप्रायश्चित्तार्द्धेन शरीरशुद्धिं कृत्वा परलोकक्रियां कुर्य्यात् ।

तदाहापस्तम्बः—

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।

उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥

इतिवत् मातृत्यागो न विगर्हितः । तस्याः शुश्रूषा तु नित्या पतिताया अपि । सपत्नीप्रभृतिस्त्रीगमनेऽप्येवं प्रायश्चित्तं वेदितव्यम् ।

कूर्म्मपुराणे—

सवर्णोत्तमवर्णस्त्रीगमनेन विचारतः ।

ब्रह्महत्याव्रतं कुर्य्यात् द्वादशाब्दं समाहितः ॥

असत्याभासतो गच्छेत् सवर्णाश्चोत्तमाश्च वा ।

कारीषवह्निना दग्धः शुद्धिं याति द्विजोत्तमः ॥

रेतःसेकात् पूर्व्वमेव निवृत्तो यदि मातरि ।

ब्रह्महत्याव्रतं कुर्य्यात् पचेदेकाग्निदाहकम् ॥

सवर्णोत्तमवर्णस्त्री निवृत्तो वीर्य्यसेचनात् ।

ब्रह्महत्याव्रतं तत्र षडब्दं विधिपूर्व्वकम् ॥

क्षत्रियां पितृभार्य्यान्तु गत्वा विप्रः सतन्मुने।
ब्रह्महत्याव्रतं कुर्य्यात् नवाब्दं विष्णुतत्परः॥
वैश्यायां पितृभार्य्यायां षडब्दं व्रतमाचरेत्।
मातृष्वसारञ्च पितृष्वसारम्
आचार्य्यपत्नीं श्वशुरस्य पत्नीम्।
आचार्य्यपुत्रीमथ मातुलानीम्
पुत्रीं स गच्छेद्यदि कामतो यः॥
दिनद्वये ब्रह्महत्याव्रतं कुर्य्याद्यथाविधि॥
एकस्मिन्नेव दिवसे बहुवारे निवार्णिकम्।
एकवारं कृते त्वर्द्धं व्रतं कृत्वा विशुध्यति॥
दिनत्रये गच्छति चेत् वह्नौ शुध्यति नान्यथा[1]।
चाण्डालीं पुक्कसीं चैव स्नुषां च भगिनीं तथा।
मित्रप्रियां शिष्यपत्नीं यस्तु वै कामतो व्रजेत्।
ब्रह्महत्याव्रतं कुर्य्यात् षडब्दं ध्वजवर्ज्जितम्॥

एतासां मातृव्यतिरिक्तानां पापग्रस्तावतीनां त्यागएव परम्। अन्यथा संसर्गतो दोषगुणा भवन्तीति।

तदाह कात्यायनः—

पतितां पुत्रगमनां मातरं पोषयेत् सुतः।
कुटीरं वलयाकारं सूक्ष्मं कुर्य्यात् प्रयत्नतः॥
तत्र तां सन्निवेश्याय चतुर्भिः कवलैर्नृप।

---

(१) दिनत्रये गच्छति वह्नौ दग्धः शुध्यति नान्यथा। इति केचित्पुस्तकपाठः।

मयूराङ्गप्रमाणैस्तैः प्रत्यहं बन्धुमार्गतः ।
यावता म्रियते माता तावद्दत्वा प्रयत्नतः ॥
पतितस्य यदुक्तं तत् प्रायश्चित्तार्द्धमाचरेत् ।
परलोकक्रियाः सम्यक् कृत्वा शुद्धिमवाप्नुयात् ॥
अकृत्वा दोषमाप्नोति पुत्रस्तत्पापशुद्धये ।
एतासामार्य्यनारीणां त्यागएव विधीयते ॥

राजवैश्ययोरिदमेव प्रायश्चित्तं विधीयते ।

वर्णत्रयस्य विप्राणां भार्य्या माता विज्ञीयते ।
तद्दारेषु यदा गच्छेद् वर्णत्रयमकामतः ।
तत्रापि पितृवद् बुद्ध्या प्रायश्चित्तं समाचरेत् ॥
शूद्रस्य मौसलं प्राहुरिति शास्त्रेषु निश्चितम् ।
कामः सर्व्वधनाहारी कामः पुण्यविनाशकृत् ॥
कामः पापकरो नित्यं कामोऽनर्थप्रदायकः ।
कामः शत्रुर्मनुष्याणां तस्मात् कामं परित्यजेत् ॥
संसारेऽस्मिन् महाघोरे मोहनिद्रासमाकुले ।
ये हरिं शरणं यान्ति कृतार्थास्ते न संशयः ॥
पुत्र-दार-गृह-क्षेत्र-धन-धान्य-विमोहिनीम् ।
लब्ध्वेमां मानुषीं वृत्तिं रे रे गर्व्वं तु मा कृथाः ॥
सन्त्यज्य कामं क्रोधं च लोभं मोहं मदं तथा ।
परापवादं निन्दां च यजध्वं भक्तितो हरिम् ॥
माता हरिः पिता दैवम् ज्येष्ठभ्राता जनार्द्दनः ।
गुरुर्विष्णुः प्रसन्नात्मा राजा प्रत्यक्षदैवतम् ॥

तद्दारास्तु तथाश्रेयास्तत्राद्रोहं न कारयेत्।

आपस्तम्ब:—

"गुरुतल्पगामी सवृषणं शिश्नं परिवास्याञ्जलौ आधाय दक्षिणां दिशमनावृत्तिं व्रजेत्। ज्वलितां वा सूर्मिं परिष्वज्य समाप्नुयात्"* इति दोषश्रवणात् तद्दारेषु द्रोहबुद्धिर्न कार्या।

इति हेमाद्रिविरचिते धर्मशास्त्रे प्रायश्चित्ताध्याये गुरुतल्पगमनप्रायश्चित्तम्।

---

* आपस्तम्बधर्मसूत्रे १-९-२५।१-२।

## अथ तत्संयोगिप्रायश्चित्तमाह ।

कूर्म्मपुराणे—

महापातकसंसर्गे महासान्तपनं स्मृतम् ।
सङ्गं कृत्वार्द्ध[1]मासे तु उपवासान् दशाचरेत् ॥
[2]पराकं माससंसर्गे चान्द्रं मासत्रये व्रतम् ।
कृत्वा षण्मासंसर्गे कुर्य्याच्चान्द्रायणत्रयम् ॥
किञ्चिन्न्यूनाब्द सङ्गे तु षण्मासं व्रतमाचरेत् ।
अब्दस्य त्रिगुणं प्रोक्तं ज्ञानाज्ञाने यथाक्रमम् ॥
यस्तु संवत्सरं त्वेतैः शयनासनभोजनैः ।
वसेच्च[3] सहितं विद्यात् पतितं सर्व्वकर्म्मसु ॥
महापातकिनस्त्याज्याः सर्व्वदा विप्रसत्तमैः ।
महापातकिनो लोके दर्शनात् पापदायिनः ॥
स्पर्शान्नरकदानित्यं स्मरणाल्लोकहारिणः ।
[4]सत्सङ्गतिः सदा नृणां कामधेनूपमास्मृता ॥
अतः सत्सङ्गतिः कार्य्या नृभिः पुण्याभिलाषिभिः ।
पुण्यमेव सदा कार्य्यं पुण्यमेव सदा स्मरेत् ॥

---

(१) कृत्वा तु मासे तु इति क्रीतपुस्तकपाठः ।
(२) पराकान् इति क्रीतलेखितपुस्तकयोः पाठः ।
(३) वसेच्चेत् इति लेखितपुस्तके पाठः ।
(४) सन्तोगतिः इति क्रीतपुस्तके पाठः ।

पुण्यमेव [1]सदा पश्येत् तस्मात् पुण्याधिकं न च ।
अतोमहद्भिः संसर्गः कर्त्तव्यो धर्म्म[2]वित्सुधीः ॥
दुःसङ्गं वर्ज्जयेन्नित्यं सुराभाण्डादिकं यथा ॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
महापातकिसंसर्गप्रायश्चित्तम् ।

---

(१) पुण्यमेवच संपश्येदिति क्रीतपुस्तके पाठः ।

(२) धर्म्मविद्बुधैः इति क्रीतपुस्तकपाठः ।

## [अथेदानीं उपपातकप्रायश्चित्तं ब्रुवन् गोवध-प्रायश्चित्तमाह ।]

मार्कण्डेय पुराणे—

सर्व्वेषामेव वर्णानां ब्राह्मणः परमोगुरुः ।
तथा च पशुजन्तूनां गौर्मातेति प्रगीयते ॥
विप्रहत्या च गोहत्या सममेतद्द्वयं नृणाम् ।
पुरा चतुर्म्मुखोब्रह्मा सृष्ट्यादौ सृष्टवांश्च गाः ॥
यस्मात् वेदांश्च विप्रांश्च मरचिं स्रुक्स्रुवादिकान् ।
सृष्टवान् यज्ञरक्षार्थं महीपालानतःपरम् ॥
गावो विप्राश्च यज्ञाश्च पुनन्तीह[1] महीमिमाम् ।
गोहिंसां यो नरः कुर्य्यान्निष्कारणतया त्विह[2] ।
न तस्य निष्कृति[3]र्नास्ति प्रायश्चित्तशतैरपि ॥

गोसवएव कारणं हनने [4]मधुपर्कश्च । तयोरभावाद् गोहिंसनं गर्हितमेव कलियुगे ।

अग्न्याधेयं गवालम्भं सन्न्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्ज्जयेत् ॥

यज्ञार्थमेव गोहिंसनं नान्यदा[5] ।

---

[—] अयं पाठः क्रीतकायोपुस्तकेनोपलभ्यते ।

(१) पुनन्ति हि इति क्रीतलेखितपुस्तकपाठः ।

(२) चवः इति क्रीतपुस्तके वमः इति लेखितपुस्तके पाठः ।

(३) निष्कृतिर्नास्ति इति लेखितपुस्तके पाठः ।

(४) मधुपर्के च इति क्रीतलेखितपुस्तकपाठः ।

(५) नान्यत्र इति क्रीतपुस्तकपाठः ।

गोहिंसां मुखज: कृत्वा महापापमवाप्नुयात्।
तथैव विप्रहिंसाञ्च महतां गर्हितं द्वयम्॥

## हिंसा दशविधा।

तदाह गौतम:--

क्रूररज्ज्वा कण्ठबन्धो दारुबन्धस्तथा गले।
निराधारे स्थले बन्ध स्तथा ग्रास[1]निपीड़नम्॥
ताड़नं रज्जुदण्डाद्यैस्तथा सञ्चाररोधनम्।
शृङ्गच्छेदस्तथा वाहोऽविचारं दोहनं तथा॥
वत्से मृते च क्षीराणामादानं चर्म्मवत्सत:।
इतीह दशधा हिंसा गवां प्रोक्ता मनीषिभि:॥
एताभि र्गा यदा हिंस्यात्तदा गोवध इष्यते।
गोमूत्रं गोमयं क्षीरं दधि सर्पिरितीरितम्॥
महापातकिनां चैव तथैव क्षुद्रपापिनाम्।
पापं चतुर्व्विधं प्रोक्तं शुष्कं चार्द्रं महत्तरम्॥
उपपातकमित्येतत् चतुर्द्धा परिकीर्त्तितम्।
उक्तस्यैतस्य पापस्य पञ्चगव्यं विशोधनम्॥
गौर्यस्य च गृहे नास्ति होमार्थं पापनाशिनी।
तद्गृहं रुद्रभूमि: स्यादगृहस्थ: स च पापकृत्॥
अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रह:।
सर्व्वभूतदयालुत्वं षड्विधं गृहमेधिनाम्॥

---

(१) तथा ग्रासनिपीड़ने इति क्वौतपुस्तकपाठ:।

गौर्यत्रैव सदा तिष्ठेत् तत् क्षेत्रं काशिकासमम् ।
न सन्ति तत्र पापानि तथा बालग्रहादयः ॥
नमस्कारैः सेवितव्या सत्यापि मनसापि गौः ।
तथा सम्पाद्य बहुभिर्धनैर्वा पापमुक्तये ॥
एतां धेनुं यदा विप्रो हिंस्याच्चेन्नगुड़ादिभिः ।
महापापमवाप्नोति योवा कोवा भुवस्तले ॥
तदन्ते भुवमासाद्य चाण्डालत्वमवाप्नुयात् ॥

चण्डिकाखण्डे—

गोहन्ता यस्तु वै लोके रज्जुपाशाश्ववेष्टनैः ।
अरण्ये वा गृहे वापि रोषाद्वा कामकारतः ॥
यमालयमुपागम्य नरकञ्चानुभूय च ।
तदन्ते भुवमासाद्य जायते त्वर्ग्गरोगवान् ॥

लिङ्गपुराणे —

यो द्विजोमदलोभेन मत्सरादीर्ष्यया नृप ।
गां हत्वा यस्य कस्यापि विपिने वा जलाशये ॥
रज्जुकण्ठाश्मभिर्घोरैः कण्ठभेदनपीड़या ।
भवेत्तस्य महान् दोषः प्रायश्चित्तीभवेद्ध्रुवम् ॥
हत्वा तु मुखजो ज्ञानान्मदेन महता वृतः ।
नरकान्न निवर्त्तेत प्रायश्चित्तं विना प्रभो ॥
पश्चात्तापसमायुक्तः पराकं कृच्छ्रमाचरेत् ।
अज्ञानतः पराकः स्यात् ज्ञात्वा चान्द्रायणं स्मृतम् ॥
कामतो गोबधे चैव शुद्धिर्दृष्टा मनीषिभिः ।

नागरखण्डे—

अकामतः कामतो वा विप्रो हन्याच्च गां शुभाम्।
तस्यैव शुद्धिरुदिता पराकश्चान्द्रभक्षणम्॥
उपोष्य रजनीमेकां पञ्चगव्येन शुद्धिमान्।
अन्यथा दोषमाप्नोति धर्मौरोगी भवेद्भुवि॥

विष्णुधर्मोत्तरे—

सांपराकं? च धेनुं यो मुखजो मत्सरोद्धतः।
हन्ति दण्डादिभिः पापी तस्य देहविशुद्धये॥
अज्ञानात्तु पराकः स्यात् ज्ञानाच्चान्द्रस्य भक्षणम्।
हत्वा[1] तु रोगिणीं हृद्यां पराकं कृच्छ्रमाचरेत्॥
युवतीं गां द्विजो हत्वा[2] कुर्य्याच्चान्द्रायणं सकृत्।
उपोष्य रजनीमेकां पञ्चगव्यं पिवेत्ततः॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
गोवधप्रायश्चित्तम्।

---

(१) यो हत्वा इति क्रीतलेखितपुस्तकपाठः।
(२) हन्यादिति क्रीतलेखितपुस्तकपाठः।

## अथ निमित्तगोवधप्रायश्चित्तमाह ।

कूर्म्मपुराणम्—

अनाधारे स्थले बन्धो निराहारो गवामिह ।
एभिर्निमित्तैरन्यैश्च पतनाद्भित्तिद्रुमयोः ॥
यदा[1] म्रियेत वा धेनुर्हत्या तत्स्वामिनो भवेत्
अतः स्वामी परामृश्य कुर्य्यात्तद्रक्षणं सदा[2] ॥
तत्पोषणे महत्पुण्यमनन्तं परिकीर्त्तितम् ।
तदुपेक्षा महत्पापं पतनं जन्मजन्मसु ॥
अग्निहोत्रस्य या धेनु र्या[3] धेनुः शम्भुभाषणे ।

अभिषेकार्थमित्यर्थः ।

या धेनुर्गुर्व्विणी राजन् या धेनुः कपिलात्मिका ।
एतै[4]र्निमित्तैः सा धेनुर्हता यदियमाश्रया ॥
तत्स्वामी मुनिभिः प्रोक्तो गोहन्तेति न संशयः ।
अग्निहोत्रादिधेनूनामेकां वापि निमित्तजैः ॥
हन्ता तत्पापमोक्षार्थं पराको मुनिचोदितः ।
इतरासां गवां राजन् निमित्तैरेभिरश्नतः ॥
हननं प्राप्यते दैवात् स्वामिना चान्द्रभक्षणम् ।
अशक्तो रोगदुःखाभ्यां हन्तिश्चेतैः प्रमादतः ॥

---

(१) यथा इति केषुचितपुस्तके पाठः ।
(२) सुदा इति केषुचितपुस्तके पाठः ।
(३) तथा शम्भुं प्रपूजयेत् इति क्रीतपुस्तकपाठः ।
(४) नैर्निमित्तै सा हि धेनुः इति क्रीतपुस्तकपाठः ।

तत्स्वामिने तप्तकृच्छ्रं मुनिभिःपरिकीर्त्तितम् ।
अग्निदाहे प्रधानस्यच्छेदे रोगनिवृत्तये ॥
यदि दैवान्मृतिः प्राप्ता प्राजापत्यं विशुद्धिदम् ।
दारुणा गुरुणा कण्ठे लग्ने पतति[1] याच गौः ॥
मृता[2] तद्दोषशान्त्यर्थं पराकः कृच्छ्रमीरितम् ।
तत्सुतामध्यदेशे तु बन्धने ताड़नेऽपि वा ॥
क्रियादेशे वनैकान्ते मृता या धेनुरग्रतः ।
प्राजापत्यद्वयं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥
औषधं रोगमोक्षाय कर्त्ता कुर्य्याद्गवामिह ।
तेनौषधेन या धेनुर्मृतिमाप सुदुस्तराम् ॥
तत्र चान्द्रायणं प्रोक्तं प्रायश्चित्तं विशुद्धये ।
तत्र क्षीरघृते धेनुरक्षणाय गवामिह ॥
कुर्य्यात् तद्विपरीतं चेन्मृता चेद्धेनुरग्रतः ।
तत्रैव हत्वा महती तप्तकृच्छ्रद्वयं चरेत् ॥
पतने भित्तिवृक्षाणां शक्तितानां नृपोत्तम ।
तत्र ग्रस्ता च या धेनुर्मृता तत्पतने तथा ॥
तदा तद्देहशुद्ध्यर्थं प्रोक्तं चान्द्रायणं द्विजैः ।
काष्ठस्यरज्जुबन्धेन यदा गौर्निधनं गता ॥
पराकः पापशुद्ध्यर्थं वह्निदाहेऽप्यमोचने ।
पराकस्तत्र योक्तव्यो निम्नोन्नतभुवःस्थले ॥

---

(१) नवर्त्ति या च गौः इति लेखितपुस्तकपाठः ।

(२) मृत्वा इति लेखितपुस्तकपाठः ।

तत्रापि पराकद्दत्यर्थः ।

एतासां गवामेतैर्निमित्तैः हननप्राप्तौ तद्दोषोपशान्त्यर्थं तत्त-त्प्रतिपदोक्तं प्रायश्चित्तम् । लोकसादृश्यात् तत्तत्कर्म्मानुरोधेन नेच्छन्ति चेत् तदा दोषमाह—

गौतमधर्म्मे—

एभिर्निमित्तैः स्वकृतैर्यदा यत्रैव धेनवः ।
पञ्चत्वं यदि गच्छन्ति स्वामिनः पश्यतः सतः ॥
हत्या प्राप्ता[1] सुमहती लोकद्वयविगर्हिता ।
यस्य[2] दोषस्य यत्प्रोक्तं तत्तत्कुर्य्याद्विशुद्धये ॥
अन्यथा लोकसादृश्यात् प्रायश्चित्तपराङ्मुखः ।
यदि [3]वर्त्तेत लोकेऽत्र पुत्रदारप्रजाश्रयः ॥
अन्ते नरकमासाद्य मातङ्गत्वमवाप्यते ।
तदन्ते भुवमासाद्य भिन्नो भवति गर्हितः ॥
तस्माद्देहविशुद्ध्यर्थं कुर्य्यान्निष्कृतिमुत्तमाम् ।
विप्रहत्या च महती तथा धेनुविहिंसनम् ॥
उभयोर्यदि हत्या तु कर्त्तुर्नोविहिता गतिः ।
अप्रमत्ततया राजन् धेनवो [4]मातृवत्सदा ॥
पोषणीयाः पालनीया वर्णैस्त्रिभिरिहादरात् ।

---

(१) हत्या च प्राप्ता महती इति क्रीतपुस्तकपाठः ।
(२) यदा दोषस्य इति लेखितपुस्तकपाठः ।
(३) वर्त्तेद्दुर्बुद्धि लोकेऽत्र इति क्रीतपुस्तकपाठः ।
(४) मातृवत्सका इति क्रीतकाशीपुस्तकयोः पाठः ।

क्षत्रियवैश्ययोरप्येवं प्रायश्चित्तं निमित्तगोहनने वेदितव्यम्। शूद्राणामेतत्साक्षाद्धनने शतकृपकेण दण्डः। विप्रस्त्रीणामेतासां हनने विप्रस्यार्द्धं प्रायश्चित्तम्। क्षत्रियवैश्यस्त्रीणामपि स्वजातिपुरुषाणां प्रायश्चित्तार्द्धं कल्पनीयम्। शूद्रस्त्रीणां शूद्रवदाज्ञा राज्ञा कर्त्तव्या न स्त्रीतिविचारणीयम्।

तदाह लिङ्गपुराणे—

बाहुजोरुजपादाब्जजातानां हनने गवाम्।
निमित्तेर्वाथ साक्षाद्वा प्रोक्ता विप्रस्य निष्कृतिः॥
निमित्तहनने वाथ विप्राणां यदुदीरितम्।
तत्कर्त्तव्यं नृपैर्वैश्यैस्तत्स्त्रीणामिदमीरितम्॥
विप्रस्त्रीणां तथाप्रोक्तं शूद्राणां प्राण[1]पीड़नम्।
तत्स्त्रीणाञ्च तथा कार्य्यं निमित्तेन शतं विदुः॥

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
निमित्तगोवधप्रायश्चित्तम्।

---

(१) प्राणिपीड़नं इति क्वचित्पुस्तकपाठः।

## अथ गोवत्सहननप्रायश्चित्तमाह ।

मार्कण्डेयपुराणम्—

वत्सश्च त्रिविधः प्रोक्तो बालः पौगण्डको युवा ।
एतेषां हनने विप्रो निमित्तैः कृत वा स्वयम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु पञ्चसु ।
अतो वत्साः पोषितव्या विप्रैर्लोकेप्सुभिः सदा ॥

यावत्[1] तृणभक्षणेन स्वोदरपूरणं न जानाति स बालः । मातरं त्यक्त्वा स्वेच्छया सञ्चरति स पौगण्डकोवत्सः । गर्भधारणसुखं ज्ञात्वा अनडुद्भिः सह सञ्चरति स युवा । वत्सजननात्तत्परं गौः । एतेषां हनने पृथक् पृथक् [2]दोषं प्रायश्चित्तञ्चाह ।

कौर्म्मे—

स बालोदरपूर्त्त्यर्थं यावत्कालं तृणादनः ।
अधस्यां मातरं त्यक्त्वा सञ्चरन् स्वेच्छया नृप ॥
पौगण्डकः स विज्ञेयः सञ्चरन् मत्तमत्तवत् ।
गोवृषैः सह यः क्रीडन् स युवा त्रिविधः स्मृतः ॥
सा गौ र्या वत्ससूर्ज्ञेया महापातकनाशिनी ।
एतेषां त्रिविधानाञ्च मध्यैको यो निहन्यते ॥

येन हन्यते हत्यर्थः । छन्दोवत् पुराणानीति ज्ञात्वा अर्थ[3]सौष्ठवं न विचारणीयम् ।

---

(१) अनवत्सभक्षणं इति क्रीतपुस्तके पाठः ।
(२) दोषभावश्चित्तमाह इति क्रीतपुस्तके पाठः ।
(३) अर्थसौष्ठवाद्विचारणीयमिति क्रीतपुस्तके पाठः ।

तदाह नारदीये--

"राजा योऽहन्यते तमाहुरासयूपो यज्ञोऽननादरिव" इति

लिङ्गपुराणे--

वत्सानां त्रिविधानाञ्च एकं हन्याद्द्विजो यदि।
तत्तत्पापफलं भुक्त्वा चाण्डालत्वमवाप्यते॥
बालं हन्याद्द्विजोयस्तु चौरादानाभिमित्तजैः[1]।
प्राजापत्यद्वयं साक्षात् निमित्तैरेकमुच्यते॥
कृत्वा शुद्धिमवाप्नोति अन्यथा पशुघातकः।

स्कन्दपुराणे--

यो बालवत्सं कामेन निमित्तैर्वा स्वयं हनेत्।
तत्र देहविशुद्ध्यर्थं प्राजापत्यद्वयं चरेत्॥
निमित्तैर्वा यदा हन्यात् चौरादानादिभिः क्रमात्।
निमित्तपापमित्युक्तं प्राजापत्यं समाचरेत्॥
विप्रस्त्रीणां तदर्द्धं स्यात् बालवत्सविहिंसने।
क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं भवेत्॥
तत्तत्स्त्रीणां तदर्द्धं स्यात् पादजं दण्डयेच्छतम्।
पौगण्डकं तु योवत्सं निमित्तैर्वा स्वयं हनेत्॥
तत्रैवेदं विशुद्ध्यर्थं तप्तकृच्छ्रं चरेत् पुरा।

(१। चौरदाननिमित्तजैः इति क्रोडपुस्तके पाठः।

( विष्णुधर्म्मोत्तरे

येन विप्रेण पौगण्डोवस्थोयदि निहन्यते।

तस्य देहविशुद्ध्यर्थं तप्तकृच्छ्रत्रयं चरेत् ॥ )

शिवधर्म्मोत्तरे—

पौगण्डकं सदोषन्तो गोकुले स्वगृहेऽथवा।

निमित्तैः पूर्व्वजो विप्रो हन्यादेवं[1] प्रचोदितम् ॥

तद्दोषपरिहारार्थं चरेत्तत्सं यथाविधि।

पञ्चगव्यं ततः पश्चात् पिबेद्ब्राह्मणनाशनम् ॥

क्षत्रियाणां द्विगुणितं वैश्यानां त्रिगुणं स्मृतम्।

विप्राङ्गनानां क्षत्रियादिस्त्रीणां तत्तत्प्रायश्चित्तार्द्धं कल्पनीयम्। पादजं शतेन दण्डयेत्।

गारुड़पुराणे—

युवानं गोप्तरं हन्यात् पूर्व्वजः स्वयमादरात्।

निमित्तैर्वाथ राजेन्द्र परप्रेरणया[2] तथा ॥

महान्तं नरकं गत्वा जायते हयमूत्रवान्।

हयस्य शृङ्गवयत्रूपत्ती तद्वत्सूनावस्य मध्यस्य हन्तुः, तत्स्थाने मधुरहयवान् भवेदित्यर्थः।

---

(—) अयं पाठः श्रीतवाशीपुस्तकयोर्न दृश्यते।

(१) हन्यादेवप्रचोदितः इति श्रीतपुस्तके पाठः।

(२) प्रेरणयाऽथवा इति वैदिकपुस्तकपाठः।

भविष्योत्तरे—

युवानं गोवृषं हत्वा पूर्व्वजो बान्धवो वणिक् ।
महान्तं नरकं भुक्त्वा जायते शोकवान् भुवि ॥

स्कन्दपुराणे—

अरण्ये जलमध्ये वा खण्डे वा द्विजोत्तमः ।
युवानं गोवृषं हन्यान्निमित्तैरुत वा स्वयम् ॥
तत्तत्पापफलं भुक्त्वा जायते भुवि रोमवान् ।
तस्य दोषस्य शान्त्यर्थं कुर्य्याच्चान्द्रस्व[1] भक्षणम् ॥
गोदानञ्च ततः कुर्य्यात्पञ्चगव्यमनन्तरम् ।
कृत्वा शुद्धिमवाप्नोति नीरोगो जायते भुवि ॥
विप्रस्त्रीणां तदर्द्धं स्यात्प्रायश्चित्तमुदीरितम् * ।

क्षत्रियवैश्यानां तदङ्गनानाञ्च द्वैगुण्यं त्रैगुण्यं तदर्द्धं च क्रमेण योजनीयम् ।

इति हेमाद्रिविरचिते धर्म्मशास्त्रे प्रायश्चित्ताध्याये
गोवत्सहननप्रायश्चित्तम् ।

---

(१) चान्द्रायणव्रतमिति क्षीतपुस्तके पाठः ।

* "तत ऊर्द्धं गदृनं गोवधप्रायश्चित्तवत् कुर्यांविक्रीतविवेचनया योजनीयं" इत्यधिकः पाठः कस्पचकस्मिते क्षीतपुस्तके ।

## वृषोत्सृष्टवृषहननप्रायश्चित्तम् ।

कूर्म्मपुराणे—

एकादशेऽह्नि सम्प्राप्ते पित्रोर्मरणसम्भवे ।
पिशाचत्वविमुक्त्यर्थं उत्सृष्टो योऽत्र वृषः परैः ॥
हन्यते यदि राजेन्द्र चिह्नितः शिवमुद्रया ।
शिवद्रोहीति विख्यातः सर्व्वधर्म्मबहिष्कृतः ॥
मृत्वा नरकमासाद्य चाण्डालत्वमवाप्नुयात् ।
तस्यैव निष्कृतिर्नास्ति कारीषदहनादृते ॥

स्कन्दपुराणे—

पित्रोरर्थं तु काम्यार्थं अन्यैरुत्सृष्टमुत्तमम् ।
शिवलिङ्गाङ्कितं सम्यक् शिवरूपं जनाधिप ॥
वृषं हन्याद् यदा विप्रः केदारक्षेत्र[1]भक्षणात् ।
परप्रेरणया वापि चरन्ते ग्रामएव वा ॥
रज्जुबन्धादिभिः सम्यक् सहायैरुपदिष्टवान् ।
तदुपायप्रदो मर्त्त्यः सदोपेक्षापरायणः ॥
हन्ता तत्र महापापी चत्वारः पापभागिनः ।
राजा तं दण्डयेत् सम्यग् विचार्य्य बहुवार्त्तया ॥
तेषां भालेषु[2] कर्त्तव्यं तप्तलिङ्गं नृपोत्तमैः ।
निःशाणं[3] वादयन् भृत्यैर्नृपहन्तेति सर्व्वतः ॥

---

(१) क्षेत्रशस्यभक्षणादिति श्रीतपुस्तकपाठः ।
(२) तेषां भालेषु कर्त्तव्यं इति श्रीतपुस्तकपाठः ।
(३) निःवाद्यं इति श्रीतपुस्तकपाठः ।

घटित्वा नगरीं सर्व्वां निर्व्वास्या विषयादपि ।
तदा प्रभृति ते सर्व्वे तीर्थे तीर्थे समाचरन् ॥
आर्षेयेषु च देवेषु चरन्तः प्रत्यहं मुदा ।
पश्चिमद्वारकामेत्य हंसद्वारे तथोत्तरे ॥
तथैव पूर्व्वदिग्भागे गङ्गासागरसङ्गमे ।
तथैव दक्षिणे भागे चापाग्रे गन्धमादने ॥
एवं क्रमेण कुर्व्वन्तः[1] भूपरिक्रमणं त्रिभिः ।
चापकोटिमुपागम्य तत्र स्नात्वा दिनत्रयम् ॥
पश्चात्तापसमायुक्ताः सभामागम्य वाग्यताः ।
तदनुज्ञामवाप्याथ चरेयुश्चान्द्रमत्रयम् ॥
पञ्चगव्यं ततः पीत्वा गां दद्याद्विप्रपुङ्गवे ।
एतेन शुद्धिमाप्नोति ब्रह्महा रघुनन्दन । इति ॥

ब्रह्मवैवर्त्ते—

यो विप्रो वृषभं हन्यात् शिवलिङ्गाङ्कितं तनौ ।
भाले[2] तन्मस्तकं[3] कृत्वा निःश्वासं[4] धमयेत् स्वयम् ॥
त्रिवारं क्ष्मां परिक्रम्य ब्रह्मचर्यव्रती स्थितः ।
पश्चात्तापं समागम्य गन्धमादनपर्व्वते ॥

---

(१) चरेयुश्च इति श्रोतवेष्टितपुस्तकयोः पाठः ।
(२) फाले इति वेष्टितपुस्तकपाठः ।
(३) तन्मस्तकं इति वेष्टितपुस्तके पाठः ।
(४) निःश्वासं इति श्रोतपुस्तकपाठः ।

तत्र स्नात्वा[1] त्रिवारं च रामलिङ्गं निरीक्षयेत् ।
पश्चात्तापमुपागम्य सभां गत्वा तदाज्ञया ॥
चान्द्रायणं ततः कुर्य्याद् दद्याद् विप्राय गां शिवाम् ॥
पञ्चगव्यं ततः पीत्वा शुद्धो भवति नान्यथा ।
राजा हन्यात् पूर्व्वमुक्तं वृषभं शिवलाञ्छितम् ॥
दद्यादात्मसमं हेम सहस्रं वा गवां चरेत् ।
विप्राङ्गना परित्याज्या पोषणीया न दानतः ॥
राजस्त्रीणां शतं प्रोक्तं गवां विप्रेभ्यश्चादरात् ।
वैश्यस्य राजवत्[2] प्रोक्तं तत्तत्स्त्रीणां तथैव च ॥
शूद्रं हन्याददोहन्ता तत्र तं निहनेद् भुवि ।
सहस्रेणाऽथवा दण्ड्याद् अन्यथा दोषमाप्नुयात् ॥
इति हेमाद्रौ उत्कृष्टवृषहननप्रायश्चित्तम् ।

---

(१) स्नानं इति शीतवेश्चितपुस्तकयोः पाठः ।
(२) राजप्रोक्तं इति शीतवेश्चितपुस्तकयोः पाठः ।

## अथ बलीवर्द्दहननप्रायश्चित्तम् ।

शिवधर्म्मोत्तरे—

अनड्वान् हन्यते विप्रैरज्जुदण्डशिलादिभिः ।
गड्डे वा विपिने तोये भारोद्वाहनकर्म्मणि ।
ज्ञानतोऽज्ञानतो वापि रोषाद्वा मत्सरादपि ॥
न तेषां निष्कृतिश्चास्ति तप्तकृच्छ्रैर्विभिर्विना ।

वराहपुराणे—

जलमध्ये भारवाहे कृषिकाले च वाहने ।
गड्डे जले वने वापि अनड्वान् यदि हन्यते ॥
पादादिताड़ने चैव शृङ्गच्छेदे च दाहने ।
लाङ्गूलच्छेदने वापि निमित्तैः पूर्व्वचोदितैः ॥
एतेरन्यतमैर्वापि विप्रोऽहन्याद् धुरन्धरम् ।
तस्यैव निष्कृतिमिमां प्रादिशन् मुनिपुङ्गवाः ॥
तप्तकृच्छ्रत्रयं कृत्वा पञ्चगव्यं पिबेत्ततः ।
एतस्माच्छुद्धिमाप्नोति नान्यथा शुद्धिरिष्यते ॥
अनड्वान् येन[1] यत्रैव निमित्तैश्च वा नृप ।
हन्यते सोऽपि दुष्टात्मा प्रायश्चित्तीभवेत्तदा ।
राजा तं सम्यगालोच्य दण्डयेच्छतरूपतः ।
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रत्रयं चरेत् ॥

---

(१) येन इति श्रोतवेष्टितपुस्तकपाठः ।

पञ्चगव्येन पूतात्मा शुद्धिमाप्नोति गोघ्नकाम् ।
राजा हन्यादनड्वाहं आयुधैर्बहुभिर्यदा ॥
तदा नरकमाप्नोति प्रायश्चित्तार्थमर्हति ।

विप्रस्य प्रायश्चित्तार्धं कुर्य्यादित्यर्थः

वणिक्पुत्रस्तु वाणिज्ये ह्यनड्वाहं यदा हनेत् ।
शूद्रो हन्याद्बलीवर्दं निमित्ते वत कामतः ॥
शतरूपेण तं दद्यादथवा हस्तमोचनम् ।

हस्तच्छेदनमित्यर्थः । तत्तत्स्त्रीणां तत्तत्प्रायश्चित्तार्द्धं योजनीयम् । बालताबण्यादिकं पूर्व्वमुक्तम् । बालपौगण्डकुमारावस्थासु यत्र यत्र हननं तत्तत्प्रायश्चित्तं पूर्व्ववत्कल्पनीयम् । भारवाहोऽनडुही-हनने उक्तप्रायश्चित्तं विशोधनम् ।

इति हेमाद्रौ बलीवर्दहननप्रायश्चित्तम् ।

## अथ गजवधप्रायश्चित्तमाह ।

लिङ्गपुराणे—

सहायैः साधनोपायैः वाग्भिर्वापि समन्ततः[1] ।
अरण्ये वा स्ववासे वा योऽहन्यादविचारयन् ॥
पश्चान्नरकमाप्नोति जायते गजचर्म्मवान् ।
तद्दोषपरिहारार्थं तप्तकृच्छ्रं चरेद्बुधः ॥

कूर्म्मपुराणे—

उपस्थाहनने तस्य सहायैस्तु साधनैः ।
अन्यैरङ्गीकृते वापि योविप्रोहस्तिनं हनेत् ॥
राजा तं दण्डयेत्पश्चात् शतरूप्येण दण्डतः ।
स पश्चान्नरकं प्राप्य कुष्ठव्याधियुतोभवेत् ॥
पश्चात्तापसमायुक्तस्तप्तकृच्छ्रं विशुद्धये ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥
तदर्द्धं करिपोते च तदर्द्धं गर्भमोचने ।
तत्स्त्रीणान्तु तदर्द्धं स्यात् प्रायश्चित्तमुदीरितम् ॥
सङ्ग्रामकामोराजा युद्धादन्यत्र न[2]हस्तिवधं कुर्य्यात् ।

---

(१) विप्रसत्तमः इति केचित्पुस्तकपाठः ।
(२) न इति क्वोतपुस्तके नोपलभ्यते ।

तदाह देवीपुराणे—

सांपराये गजं हन्याद् यदि स्वहनने स चेत् ।
तदा तस्य न दोषः स्यादित्याह भगवान् यमः ॥
गजयुद्धे गजं हन्यादन्यथा दोषभाग्भवेत् ।
लक्ष्मीः क्षीयेत तस्यास्य[1] परत्र नरकं व्रजेत् ॥

स्कन्दपुराणे—

संपत्कामो युद्धकालादन्यत्र करिहिंसनम् ।
न कुर्य्याद् यदि दुष्टात्मा तस्य सम्पद्विनश्यति ॥
मृत्वा नरकमाप्नोति सांपराये न दोषभाक् ।
आत्माभिमुखमायान्तं हन्तुं स यदि गच्छति ॥
तदा हन्याद्गजं राजा न दोषस्तत्र तस्य[2] हि ।
राजा पश्चात्प्रकुर्वीत तत्तत्कृत्यं मुदा ॥

इदं युद्धादन्यत्र गजहनने वेदितव्यम् । युद्धे हत्वा तात्कालिक-गोदानात् शुद्धिः ।

मार्कण्डेयपुराणे—

युद्धादन्यत्र योराजा प्रमादाद्धस्तिनं हनेत् ।
तत्पापशोधनं तेन प्राजापत्यत्रयं चरेत् ॥
युद्धे गोदानमात्रेण शुद्धो भवति निश्चयः ।
तदर्हं करिपोते स्यात् तदर्हं गर्भमोचने ॥

---

(१) तस्यास्तु इति श्रीतड़ुलकपाठः ।
(२) तत्र तस्य हि इति श्रीतड़ुलकपाठः ।

वैश्यानान्तु तदर्द्धं स्यात् तत्तत्स्त्रीणां तदर्द्धकम्।
शूद्रां वै दण्डयेद्राजा शतनिष्कं हरे[1]त्तु वा।
[ पोते स्यादङ्गुलिच्छेदो गजे स्याद्धस्तमारणम् ]।

इति हेमाद्रौ गजवधप्रायश्चित्तम्।

---

(१) हरेत्तु वा इति क्रीतपुस्तकपाठः।
[—] इदमर्द्धं क्रीतकाशीपुस्तकयोर्न दृश्यते।

## अथ भ्रूणवधप्रायश्चित्तमाह ।

स्कान्दपुराणे—

भ्रूणहन्ता भवेद्विप्रो लोके वेदवहिष्कृतः ।
पूर्व्वोक्तैर्वा निमित्तैर्वा सहायैश्च वा नरैः ।
स विप्रोनरकं याति कालसूत्रं सुदारुणम् ।

मार्कण्डेयपुराणे—

मारयित्वा स्वयं विप्रोनिमित्तैर्बहुभिर्यदा ॥
हन्यात् स्वयं वा राजेन्द्र गृहे वा कानने जले ।
सपद्यानरकं याति यावदाभूतसंप्लवम् ॥
तस्यैव निष्कृतिरियं व्यासेन परिभाषिता ।
स्वयं हन्यात् षडब्दं स्यात् निमित्ते [1]रर्द्धमीरितम् ॥
गृहदाहादिभिः पापी ज्ञात्वा तद्द्विगुणं चरेत् ।
तदर्द्धं वड़वायाश्च तदर्द्धं गर्भमोचने ॥
शिशौ पौगण्डके चैव वड़वार्द्धं समाचरेत् ।

महानारदीये—

जनसङ्गे महारण्ये स्वगृहे यदि पूर्व्वजः ॥
दिवाजननभीत्यात्तु स्वयं[2] हन्यान्निमित्तजैः ।
महान्तं नरकं गत्वा यमपाशनिबन्धनम् ॥
पुनर्भुवमुपागम्य जायते व्याधिमान् सदा ।
बालं पौगण्डकं वापि युवानं यदि कामतः ॥

---

(१) वधमीरितम् इति श्रीतपुस्तकपाठः ।

(२) स्वयं इति श्रीतपुस्तकपाठः ।

अश्वं हन्याद् द्विजोयस्तु प्रायश्चित्तीभवेत्तदा ।
कुर्य्यात्तत्कर्म्मशुद्ध्यर्थं षड़ब्दं कृच्छ्रमादरात् ॥
वड़वायामर्द्धमुक्तं तदर्द्धं बालमारणे ।
गृहे दाहादिभिश्चार्द्धं तदर्द्धं गर्भमोचने ॥
राजा योयदिमं हन्याद् युद्धादन्यत्र वाजिनम् ।
स राजा नरकं गत्वा व्याधियुक्तो भवेद्भुवि ॥
तस्यैव निष्कृतिर्दृष्टा विप्रस्यार्द्धं मनीषिभिः ।
विप्रस्तु राजवत्प्रोक्तं शूद्रोदण्ड्योयथाविधि ॥

तत्तत्स्त्रीणां तत्तदर्द्धक्रमेण योजनीयम् । शूद्रान् पूर्व्ववद् दण्डयेत् शतरूप्यकं वा हस्तच्छेदो वा इति सर्व्वत्राध्याहारः । राज्ञा स्वोपरिपातने बधः कर्त्तव्योनान्यथा ।

मार्कण्डेयपुराणे—

अश्वयुद्धे तु[1] संप्राप्ते स्वयमारुह्य वाजिनम् ।
यदा हन्यात्स्वयं तत्र नान्यथादोषसम्भवः ॥
प्रायश्चित्तमिदं कृत्वा शुद्धिमाप्नोत्यनुत्तमाम् ।

इति हेमाद्रौ अश्ववधप्रायश्चित्तम् ।

---

(१) अश्वयुद्धे यदाप्राप्ते इति क्वचित्पुस्तकपाठः ।

## अथ उष्ट्रवधप्रायश्चित्तमाह ।

स्कन्दपुराणे—

पट्टने च वने राजन् प्रमादाद्वा क्रमेलकम् ।
उपायैर्हननैर्योग्यैर्मेलयित्वा महात्मभिः ॥
हत्वा पश्चात्तदा प्राणाद्घोरवं नरकं व्रजेत् ।
तदन्ते भुवमासाद्य वक्राङ्गो जायतेऽधुना ॥
तद्दोषपरिहारार्थं प्राजापत्यव्रतं चरेत् ।

एतन्महायमानेऽप्युक्तम् । स्वयं हनने विशेषमाह ॥

ब्रह्माण्डपुराणे--

उष्ट्रं ज्ञात्वा द्विजो हन्याद् दण्डाद्यैर्गलपीड़या ।
यमलोकमुपागम्य भुक्त्वा तत्रैव यातनाः ॥
ततोऽपि भुवमासाद्य जायते पक्षघातवान् ।
तद्दोषपरिहारार्थमब्दं कुर्यात् प्रयत्नतः ॥
पौगण्डे तच्चिह्नमावर्षं तदर्धं गर्भमोचने ।
क्षत्रियोयदिमं हन्यात् क्रमेलकमधर्मतः ॥
अधर्मोनाम तद्राज्ञां युद्धादन्यत्र उच्यते ।

नारदीये—

युद्धादन्यत्र योराजा दण्डाद्यैर्बहुभिर्यदा ।
क्रमेलकं हनेद्यत्र भरण्ये निर्ज्जने तथा ॥
ग्रामे वा कारणं त्यक्त्वा शस्त्राद्यैर्भृत्यचोदितैः ।
स गत्वा नरकं पापी पशुहन्ता भवेद्भुवि ॥

कारणं युक्तमेव पूर्व्वोक्तम्।

तद्दोषपरिहारार्थं कायक्लेशं विशोधनम्।
विप्रस्तु तत्तथा प्रोक्तं पूर्व्वमत्रविचक्षणैः॥
कन्याचेद्गतो राजा दण्डयेत् तं न मारयेत्[1]।
तत्तत्स्त्रीणां तदर्द्धं स्यात् तावदर्द्धं प्रचोदितम्॥
[ स्त्रियो पौगण्डके यूनि तदर्द्धं गर्भविप्लवे ]।

इति हेमाद्रौ प्रायश्चित्तखण्डे[2] उद्रवधप्रायश्चित्तम्।

---

(१) शूद्रोकन्यायां तं राजा दण्डयेन्नतु मारयेत् इति श्रीतर्कशिखितपुस्तकपाठः।

[—] चतुरधिकः पाठः काशीपुस्तके दृश्यते।

(२) प्रायश्चित्तखण्डे इति श्रीतर्कशिखितपुस्तकयोर्नोपलभ्यते।

## अथ खरहननप्रायश्चित्तम् ।

मार्कण्डेयपुराणे—

पापबुद्ध्या खरं हत्वा विप्रो निशि महापथे ।
पश्चाज्ज्ञात्वा खरहति निमित्तैर्वा दुरात्मभिः ॥
स एव नरकस्थायी यावदाभूतसंप्लवम् ।
पश्चाद्भवति चाण्डालो भुवमासाद्य भूमिप ॥

राजविजये—

अज्ञात्वा पापबुद्ध्या यो विप्रो हन्यात् खरं मुदा ।
निमित्तैः सङ्गदोषाद्वा सहायैर्जनचोदितैः ॥
अन्धकारे महाघोरे पश्चाज्ज्ञात्वा महान् खरः ।
इति मत्वा स पापीयान् लब्ध्वा दोषं महत्तरम् ॥
चाण्डालत्वमवाप्नोति त्रिषु जन्मसु भूमिप ।
न हिंस्यान्मृगचाण्डालं कर्म्मणा मनसा गिरा ॥

कूर्म्मपुराणे—

विप्रस्तु मृगचाण्डालं न हिंस्यात् कामकारतः ।
निमित्तैरथवा चान्यैः सहायैर्हननोद्यतैः ॥
सोऽनुभूय महत्पापं मातङ्गत्वमवाप्नुयात्[१] ।
तस्यैव निष्कृतिर्दृष्टा मुनिभिर्ब्रह्मवादिभिः ॥
स्वयं हत्वा तु चान्द्रं स्यात् पराकः सहसङ्गतः ।
निमित्तैर्यावकं प्रोक्तमज्ञानकारे सुवर्णसम् ॥

---

(१) जनतोचितं इति कोशपुस्तकपाठः ।
(२) समाप्यते इति केषुचित्पुस्तकपाठः ।

"सुवर्च्चसं" पञ्चगव्यम्[1] ।

राजा हन्यात् खरं मोहात् भृत्यैर्वाऽन्यैः प्रमादतः[2] ।
तस्य देहविशुद्ध्यर्थं पराकः परिकीर्त्तितः ॥
विप्रस्तदेव योक्तव्यं प्रयत्नेन नृपोत्तम ।
शिशौ पौगण्डके चैव राजाऽर्द्धं परिकल्पयेत् ॥
राजा तदेव[3] कुर्व्वीत राजवत्तवणिक्पतिः ।
तत्क्षीणान्तु तदर्द्धं योजनीयं विचक्षणैः ॥
शूद्रोदयाच्छतं कृच्छ्रं न वधो मुनिभिः स्मृतः ।

रासभभेदेन प्रायश्चित्तमेवं योजनीयम् । तस्य पौगण्डकौमारा-द्यपि पूर्व्वमुक्तम् तत्तत्तारतम्यहननप्रायश्चित्तं यथायथं योज-नीयम् । रासभभेदा बहवः सन्ति तेषां मध्ये बहुसञ्चारतया प्रवर्त्त-मानएव ग्राह्यः ।

इति हेमाद्रौ खरहननप्रायश्चित्तम् ।

(१) अयं पाठः वेचितपुस्तके नास्ति ।
(२) प्रमादन्यैरिति मीतवेचितपुस्तकपाठः ।
(३ यदेव इति मीतपुस्तकपाठः ।

अथेदानीं महिषी¹हननप्रायश्चित्तमाह ।

विष्णुपुराणे—

²महिषीं यो द्विजोराजा वणिग्वा शूद्रएव वा ।
हन्याद्व्याघ्रादिभिः क्रूरैर्निमित्तैरत वा स्वयम् ॥
स महानरकं याति कालसूत्रं सुदारुणम् ।
तदन्ते भुवमासाद्य लालास्यपनवान् भवेत् ॥
*महिषीमांसजो यस्तु बाहुजोरुजपादजाः ।
व्याघ्रदाहादिभिर्वान्यै³ र्निमित्तैर्बहुभिर्यदा ॥
घ्नन्ति शस्त्रैः स्वयं पश्चा तत्रैव निरयं गताः ।
महान्तं नरकं गत्वा ते लालावदनाऽभवन् ॥

शिवधर्मोत्तरे—

राजपुत्रोवणिग्वापि सुतजः पादसम्भवः ।
वनमध्ये जले गेहे महिषीं यदि यत्र वै ॥
विहिंसन्ति तदा क्रूराः प्रविशन्ति च ⁴काननम् ।
पुनर्भुवमुपागम्य चाण्डालाः सम्भवन्ति ते ॥
तद्दोषशमनायालं महासान्तपनं विदुः ।
पञ्चगव्यविधानेन पञ्चगव्यं पिबेत्ततः ।

---

(१) महिषहनन इति केचित्पुस्तकपाठः ।
(२) महिषं इति केचित्पुस्तकपाठः ।
* कूर्मपुराणे—इत्यधिकः पाठः केचित्पुस्तके दृश्यते ।
(३) राजा इति कोशकेचित्पुस्तकपाठः ।
(४) च मानताम् इति केचित्पुस्तकपाठः ।

शुचिमन्तस्तथाभूवन् नान्यथा शुद्धचेतसः ॥
साधेन्नवेद्[1] बालवत्सा तद्धिंसायां नराधिप।
विप्रः कुर्य्यात् तदा स्नात्वा महासान्तपनद्वयम् ॥
राजा सान्तपनं कुर्य्याद्वैश्यः क्षत्रियार्द्धतः।
पादजः पादमात्रञ्च प्रायश्चित्तं यथाक्रमम्।
तत्तत्स्त्रीणां तत्तदर्द्धं प्रायश्चित्तमुदीरितम् ॥

बालपौगण्डकौमारादीनि पूर्व्ववद् विचारणीयानि। स्वयं हनने पूर्णं प्रायश्चित्तम्। व्याघ्रादीनां? गर्त्तदाहादिभिर्मृता यदि तदा अर्द्धं प्रायश्चित्तम्। यस्त्वमहिषीत्युपेक्षया प्रायश्चित्तमकुर्व्वाणः पूर्व्वमुक्तं नरकं भुक्त्वा नीचतमोभवति दोषबाहुल्यात् प्रायश्चित्तमपि[2] बलीयः। वर्षत्रये पञ्चगव्यमपि।

इति हेमाद्रौ महिषीवधप्रायश्चित्तम्।

---

(१) साधेत् तन्वी इति क्षीतवेष्टितपुस्तकपाठः।
(२) प्रायश्चित्तमाचरणीयम् इति क्षीतपुस्तकपाठः।

## अथ महिषवधप्रायश्चित्तमाह।

मार्कण्डेयपुराणे—

महिषं कामकारेण रज्जुदण्डाश्मपातनैः।
योविप्रोवनमध्ये वा गृहदाहे जलाप्लवे॥
निहन्याद्दुष्टसङ्घाद्वाऽप्यन्धकारे निरन्तरे।
स विप्रोनिधनं गत्वा महत्पापमवाप्नुयात्[१]
भुवं पुनरुपागम्य जायते भिन्नजन्मवान्।

कूर्म्मपुराणे—

महिषं पूर्व्वजोयेन दोषेण महताहृतः॥
हत्वा निमित्तैर्बहुभिर्भृत्यवर्गैरथापि वा।
अरण्ये गृहदाहे वा क्षपिकाले जलोद्भवे॥
महान्तं नरकं गत्वा भुक्त्वा[२] तत्रैव यातनाः।
पुनर्मत्वा स जगतीं भिन्नजन्म समश्नुते॥

लिङ्गपुराणे—

महिषं क्षपिकाले तु ताड़नैरश्मपातनैः।
गृहे वा गृहदाहे वा योहन्यात् पूर्व्वजोषया।

---

(१) अंशमाप्नुयात् इति केचित्पुस्तकपाठः।
(२) भुक्त्वा इति केचित्पुस्तकपाठः।

मृत्वाऽनुभूय नरकं म्लेच्छोभवति भूतले ।
तस्यैव निष्कृतिरियं दृष्टा मुनिपरायणैः ॥
अज्ञानात्तत्प्रकृच्छ्रं स्यात् प्राजापत्यं निमित्ततः ।
परप्रेरणया वापि ज्ञात्वा वा द्विगुणं चरेत् ॥
बाले पादश्च पौगण्डे अर्द्धं यूनि प्रपूर्णता ।
राजा वणिक् पादजो वा कारणैर्वा [1]निपातनैः ॥
भारदाह[2]निमित्ताद्वा निम्नोन्नतमहापथैः ।
महिषं दण्डपातैर्वा हन्याद्यदिह पातकी ॥
नरकं चानुभूयाथ म्लेच्छजातिरभूत्तदा ।
अकामतस्तत्[3]प्रकृच्छ्रं प्राजापत्यं निमित्ततः ॥
ज्ञात्वा तद्द्विगुणं प्रोक्तं बाले पादं विशोधनम् ।
पौगण्डेऽर्द्धं तदाज्ञेयं यूनि पूर्णमतःपरम् ॥
बाहुजोरुजयोरेवं प्रायश्चित्तं विशोधनम् ।
पादजे पादकृच्छ्रं स्यात् तत्तत्स्त्रीणां तथा पृथक् ॥
[4]अर्द्धार्द्धधनमानेन योजनीयं यथाक्रमम् ।
विप्रस्तु महिषं हत्वा भिल्लोवा जायते तथा ॥
राजा च पौल्कसो भूयात् वणिग्वैणवजातिमान् ।
शूद्रः सङ्करतामेति महिषोजायते वने ॥

---

(१) वापि पातनैरिति काशीकेशितपुस्तयोः पाठः ।
(२) भारवाहनिमित्ताद्वा इति क्रीतपुस्तकपाठः ।
(३) तदा तत्कृच्छ्रं इति केशितपुस्तकपाठः ।
(४) अर्द्धार्द्धेन च मानेन इति क्रीतपुस्तके पाठः ।

तत्तचारी तथा भूयात् तद्दोषात्तत्परिग्रहः ॥
यतोऽन हिंसाप्यखिलं विप्रोवा राजवल्लभः ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे मक्षिपवधप्रायश्चित्तम् ।

---

## [1]छागवधप्रायश्चित्तमाह ।

महाराजविजये—

छागं वत्सं द्विजो हन्यात् कारणेन विना नृप ।

नरकं चानुभूयाशु ततः शुनो[2] भवेत् कली ॥

लिङ्गपुराणे—

ब्राह्मणो निर्निमित्तेन वत्साजौ निहनेत्तथा ।

नरकं कालचक्रन्तु ह्यनुभूय महत्तरम् ॥

पुनःश्वासुपगम्याशु सूनुर्भवति पूर्व्वजः ।

यज्ञार्थं [3]हन्ति यो विप्रो [4]ह्यनन्तं फलमश्नुते ॥

गौरीकाण्डे—

यज्ञार्थं हन्ति योविप्रो छागं मेषं सुपुण्यधीः ।

स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम् ॥

कारणेन विना राजन् छागं वत्सं न हिंसयेत् ।

योविप्रोधर्म्ममुल्लङ्घ्य पापमेतत् समाचरेत् ॥

स याति नरकं घोरं शुन[5]जन्माभवेदिह ॥

कूर्म्मपुराणे—

यागार्थं हन्ति योविप्रः छागं लोकपरायणः ।

सयाति ब्रह्मसदनं ब्रह्मणा सहमुच्यते ॥

---

(१) वत्सवधप्रायश्चित्तमिति लेखितपुस्तके पाठः ।

(२) सूनुर्भवेदिति क्रीतपुस्तके पाठः ।

(३) वहि यो विप्रः इति लेखितपुस्तके पाठः ।

(४) अनन्तफलमश्नुतेइति क्रीतपुस्तके पाठः ।

(५) शुनोजन्मभवेदिह इति क्रीतपुस्तकपाठ ।

वत्सं वापि हनेद्यस्तु स यातीन्द्रपदं शुभम्[1] ।
यागार्थं हिंसनं प्रोक्तं द्वयोर्ब्रह्मविसृष्टयोः ॥
निष्कारणेन तं हन्यात् यमलोकं सुदारुणम् ।
गत्वा भुवमुपागम्य पङ्गुर्भवतिचाण्डयः ॥
तद्दोषपरिहारार्थं प्राजापत्यद्वयं चरेत् ।
[2]अज्ञाता यदिगत्वा तु निमित्तैर्यदि हिंसयेत् ॥
प्राजापत्यं तथाकुर्य्यात् तथैवाजवधे नृप ।
प्राजापत्यं भुवोभर्त्तावश्चित्कुर्य्यात्तथैव च ॥
शूद्रे[3]र्भिक्षाप्रकर्त्तव्या तत्तत्स्त्रीणां तदर्द्धकम् ।
बालपौगण्डयूनां यथाक्रमेण[4] प्रयोजनीयम् ॥

इति हेमाद्रौ प्रायश्चित्तखण्डे अजवधप्रायश्चित्तम् ।

---

(१) स याति परमं पदं इति क्रीतकाशीपुस्तकपाठः ।
(२) अज्ञात्वा यदि इति क्रीतकाशीपुस्तकपाठः ।
(३) शूद्रैर्भिक्षा प्रकर्त्तव्या इति क्रीतपुस्तकपाठः ।
(४) यथाक्रमं इति क्रीतपुस्तकपाठः ।

## अथ द्रुमच्छेदप्रायश्चित्तमाह ।

गौरीकाण्डे—

> इन्धनार्थं द्रुमच्छेदी ग्रामे वाऽरण्यमध्यत: ।
> तच्चार्थं वा नरश्रेष्ठ स याति नरकं ध्रुवम् ॥

एतत्साधारणवृक्षविषयम् । यज्ञियवृक्षच्छेदने विशेषमाह कूर्मपुराणे—

> वैकङ्कतश्च खदिर: किंशुकस्तम्ब[1]एव च ।
> उदुम्बरश्च न्यग्रोध: शमी विल्वस्तथैव च ॥
> [2]श्लेष्मातकश्च सरलएते [3]यज्ञीयवृक्षका: ।
> चूतश्च तिंचिणीवृक्ष: कपित्थामलकौ तथा ॥
> कोविदार[4]तकश्चैव निम्बवृक्षोमधुद्रुम: ।
> जम्बूतरुर्नदीवृक्ष: अशोकतरुरेव च ॥

एते[5] वन्द्या: ।

> चम्पक: पनसश्चैव [6]मातुलुङ्गोऽर्ज्जुनस्तथा ।
> जम्बीरैरण्डवृक्षश्च [7]नारिकेलश्च खर्ज्जुर: ॥

---

(१) स्तम्बएव च इति केचित्पुस्तकपाठः ।

(२) श्लेष्मातकश्च इति केचित्पुस्तकपाठः ।

(३) यज्ञियवृक्षकाइति क्वचित्पुस्तकपाठः ।

(४) कोविदारकरश्चैव इति केचित्पुस्तकपाठः ।

(५) ते वन्द्या इति केचित्पुस्तकपाठः क्वचित्पुस्तके तु अयमंशोनोपलभ्यः ।

(६) मातुलिङ्ग इति क्वचित्पुस्तकपाठः ।

(७) नारीकेल इति क्वचित्पुस्तकपाठः ।

दाडिमीवदरीवृक्षः कुरण्टकाचिरण्टकौ।
गुञ्जावृक्षश्च[1] वकुलो नीपवृक्षस्तथैव च॥

एते ह्यारामजाः—

भल्लातको वृहत्पर्णोये ये वृक्षा मनोरमाः।
तथैव नीचवृक्षाये फलवन्तश्च पुष्पिताः॥
वन्य[2]वृक्षा श्चमी राजन् एतेषु यदि हिंसनम्।
तस्यैव तारतम्येन प्रायश्चित्तमिहोच्यते॥
क्षुत्यर्थं यज्ञपात्रार्थं यश्छिन्द्यात्कुलजं सकृत्।
तस्यैव निष्कृतिरियं कथिता मुनिसत्तमैः॥
इन्धनार्थं द्रुमच्छेदी तस्य दोषोपशान्तये।
प्राजापत्यं सकृत् कृत्वा शुद्धिमाप्नोत्यनुत्तमाम्॥
क्षुत्यर्थं वृक्षहा पापी प्राजापत्यद्वयं चरेत्।
क्षुत्यर्थमिन्धनार्थं वा यज्ञवृक्षविभेदने॥
पराकं तत्र कुर्व्वीत शुद्धोभवति वृक्षहा।
वैकङ्कतस्य[3] विच्छेदी प्राजापत्यं समाचरेत्॥
खदिरे किंशुके चैव पराकः शुचिरीरितः[4]।
उदुम्बरे च न्यग्रोधे पराकात् पूर्व्ववच्छुचिः[5]॥

---

(१) गुञ्जावृक्षो च वकुलो नीपवृक्ष इति क्रीतपुस्तकपाठः।
(२) अन्यवृक्षा इति क्रीतपुस्तकपाठः।
(३) वैकङ्कतं च विच्छेदी इति क्रीतपुस्तकपाठः।
(४ शुचिरीरिता इति क्रीतपुस्तकपाठः।
(५) शुचिरिति लेखितपुस्तकपाठः।

'चक्री कुलालकः, नित्यं स्नानसन्ध्यादि, नैमित्तिकं गङ्गा-स्नानादि, काम्यमनन्तव्रतादि, इष्टमग्निष्टोमादि, पूर्त्तं तटाक-धननिक्षेपादि ।

तदेवाह,—

कौर्म्मे—( पूर्त्तमधिकृत्य )

तटाकोधननिक्षेपो ब्रह्मस्थाप्यं सुरालयः ।

'तत्पूर्त्तिर्वनकासारौ सप्तसंस्थानमिष्यते' ॥

चतुर्दश चाण्डालभेदाः—

मार्कण्डेयपुराणे—

रजकश्चर्म्मकारश्च नटोवुरुड़ एव च ।

कैवर्त्तमेदभिल्लाश्च स्वर्णकारस्तु सौचिकः ॥

तक्षकस्तिलयन्त्री च सूतयन्त्री तथा ध्वजी ।

चतुर्दश समा ह्येते चाण्डालाः परिकीर्त्तिताः ॥

नित्यकर्म्मभ्रंशो' नामधारक इत्युच्यते ।

तदेवाह—

शिवपुराणे—

---

(१) कुलाल इति कौतपुस्तकपाठ ।

( ) अयं पाठः कौतवेष्टितपुस्तकयोर्नदृश्यते ।

(२) तत्पूर्त्तीर्रिति कौतवेष्टितपुस्तकपाठः ।

(३) सप्तार्णवमिति कौतवेष्टितपुस्तकपाठः ।

(४) भ्रंशे इति कौतपुस्तकपाठः ।

[1]शूद्रापतिः कर्म्महीनो वेदहीनश्च सूचकः ।
अतः प्रतिग्रहोराजन् गर्हितः[2] साधुवर्त्तिनाम्[3] ॥
प्राणात्ययसम्भवे तात न च दोषः प्रतिग्रहे[4] ।
अन्यथा दोषमाप्नोति दुःखी स्याज्जन्मजन्मनि ॥

शम्भुरहस्ये—

निष्कृतिस्तस्य कथिता गजं यः सम्प्रतिग्रहेत् ।
चान्द्रायणत्रयं कृत्वा पुनः संस्कारमर्हति ॥

स्कान्दपुराणे,—

हस्तिनं यो तु गृह्णीयात् मञ्जुलाशृङ्खलान्वितम्[5] ।
तस्यैव नित्यकर्म्माणि न फलन्ति द्विजन्मनः ॥
चान्द्रायणत्रयं कृत्वा पुनः संस्कारकृद्द्विजः ।
सिद्धिमाप्नोति चाण्डालादन्यथा पतितोभवेत् ॥ इति ।

चान्द्रायणलक्षणं कृच्छ्रप्रकरणे[6] अभिहितम् ।

भविष्योत्तरे ।

मञ्जुलाशृङ्खलाबद्धं हस्तिनं पापदायिनम् ।
देवालये पुण्यतीर्थे यो गृह्णीयाद्द्विजाधमः ॥

---

(१) शूद्रपतिरिति क्रीतपुस्तकपाठः ।
(२) गर्हितं इति केचित्पुस्तकपाठः ।
(३) साधुवर्त्तिना इति क्रीतपुस्तकपाठः ।
(४) प्रतिग्रहः इति केचित्पुस्तकपाठः ।
(५) शृङ्खलान्वितः इति क्रीतपुस्तकपाठः ।
(६) कृच्छ्रप्रकरणेऽपि इति केचित्पुस्तकपाठः ।

कुलालकः स सद्योऽभूत् तस्य नित्यं विनश्यति ।
चान्द्रायणत्रयं कृत्वा शुचिमाप्नोति देहिकीम् ॥
पुनः संस्कारपूतात्मा कुर्य्याद्यागादिकं पुनः ।
अन्यथा दोषमाप्नोति पुत्रहीनोऽपि जायते ॥

इति हेमाद्रौ गजप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं श्वेताश्वप्रतिग्रहप्रायश्चित्तमाह ।

कूर्म्मपुराणे,—

पुरा दुर्व्वाससः शापाद्गतैश्वर्य्यः पुरन्दरः ।
तदर्थं मथितः[1] सिन्धुर्द्दिविजैरसुरान्वितैः ॥
ऐरावतः कल्पतरुश्चन्द्रमाः कमलालया[2] ।
उच्चैःश्रवाः समुत्पन्नः श्वेताश्वस्तदनन्तरम् ॥
देवमध्ये हरिः साक्षादिदमाह वचस्तदा ।
शृण्वन्तु देवताः सर्व्वाः श्वेताश्वं तं भुवस्तले ॥
सपर्य्याणं सोपकारं सायुधं व्याधिवर्ज्जितम् ।
यो राजा विप्रसात्कुर्य्यात्[3] स गच्छेत्मामकं पदम् ॥

---

(१) मथ्यते इति श्रोतवेष्टितपुस्तकपाठः ।
(२) कमलोद्भवा इति श्रोतवेष्टितपुस्तकपाठः ।
(३) कृत्वा इति श्रोतवेष्टितपुस्तकपाठः ।

तं हयं योनु गृह्णीयात् द्विजः पापपरायणः ॥
यागादिकमकृत्वा तु चात्मभोगपरायणः ॥
स भवेन्मरणे विप्रो गर्द्दभः क्रोधसंयुतः ।
तस्य तु निष्कृतिः[1] प्रोक्ता तप्तकृच्छ्रं व्रतत्रयात् ॥

लिङ्गपुराणे,—

श्रोताश्वं पुण्यकालेषु मुख्यकालेषु पर्व्वसु ।
सायुधं सहपल्याणमुपस्कर[2]समन्वितम् ॥
निष्कारणं द्विजो धृत्वा भवेद्[3] गर्द्दभो भुवि ।
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ॥
तप्तकृच्छ्रत्रयं कृत्वा होमानां जपनं चरेत् ।

त्रयं व्रतत्रयमित्यर्थः ।

उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ।
यागादिकरणे तस्य पञ्चगव्यमलं सकृत् ॥

न प्रायश्चित्तम् । तस्मात्[4] परिशुद्धो भवति ।

मत्स्यपुराणे —

सायुधं च सपल्याणमुपस्कर[5]समन्वितम् ।
पुण्यकालेषु तीर्थेषु दत्तं राज्ञा द्विजोऽग्रहीत् ॥

---

(१) निष्कृतिर्नास्ति इति श्रोतवेष्टितपुस्तकपाठः ।
(२) सोपस्करसमन्वितं इति श्रोतवेष्टितपुस्तकपाठः ।
(३) भवेद्गर्द्दभताभुवि इति वेष्टितपुस्तकपाठः ।
(४) तदुपरि शुद्धोभवति इति श्रोतपुस्तकपाठः ।
(५) सोपस्करसमन्वितं इति श्रोतपुस्तकपाठः ।

देहान्ते तस्य वै अस्य खरस्य श्रोषजन्मनः ।
तद्दानेन द्विजोयागं शृङ्गमोचन[1]मेव वा ॥
अज्ञात्वा यदि भोगी स्यात् स सद्योगर्हभी[2]स्मृतः ।
प्रायश्चित्तमिदं ज्ञात्वा तप्तकृच्छ्रमतन्द्रयं ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥

[3]ब्रह्माण्डे,—

द्विजो[4]ऽयं प्रेतरूपं गृह्णीयात्पुत्रसद्मनि ।
तस्य वै निष्कृतिर्दृष्टा[5] तप्तकृच्छ्रमतन्द्रयात् ॥
केशानां वपनं कृत्वा पञ्चगव्येन शुध्यति ।

इति हेमाद्रौ प्रेतान्नप्रतिग्रहप्रायश्चित्तम् ।

---

(१) शृङ्गमोचनमेव वा इति श्रौतपुस्तकपाठः ।
(२) नार्हभीतसुः इति वैदिकपुस्तकपाठः । नार्हण. पुनः इति श्रौतपुस्तक-पाठः ।
(३) श्रौतपुस्तके नास्ति ।
(४) द्विजोऽयं प्रेतरूपेण इति श्रौतपुस्तकपाठः ।
(५) निष्कृतिर्नास्ति इति श्रौतवैदिकपुस्तकपाठः ।

## ( अथेदानीं तिलचक्रप्रतिग्रहप्रायश्चित्तमाह । )

ब्रह्माण्डे,—

पुरा शम्भूरथारूढः प्रतस्थे पुरसाधने ।
वेदा हया सूर्य्यचन्द्रौ रथचक्रौ बभूवतुः ॥
मेरुर्धनुर्गुणः[1] शेषः सायकस्तु चतुर्भुजः ।
सारथिर्भगवान् साक्षात् शम्भुरेव हि साधकः ॥
तथाऽपि तेन राजेन्द्र न साध्यं तत्पुरत्रयं ।
पूजितं विप्रवर्य्याय दत्त्वा शीघ्रं पुरत्रयम् ॥
अजयत्पुर[2]मागत्य महेन्द्राय ददौ हरः ।
विडौजास्तु स्वयं लब्ध्वा अजयच्छत्रुमण्डलम् ॥
सर्व्वपापहरं पुण्यं सर्व्वोपद्रवनाशनं ।
राज्यदं स्वर्गदं नृणां तिलचक्रं सुदुर्लभम् ॥
पूजयित्वा द्विजाग्र्याय योदद्यात्तन्नरोभुवि ।
अनुभूय भुवश्चक्रं तदन्ते हरिमश्नुते ॥

स्कान्दपुराणे,—

पुण्यकाले पुण्यतीर्थे तिलचक्रं भुवः पतिः ।
पूजयित्वा द्विजे[3] दद्यात् तस्मान्नोनास्ति कुत्रचित् ॥

---

(—) अयं पाठः केचित्पुस्तके नोपलब्धः ।
(१) मेरुर्धनुर्गुणैः शोभा इति शोतपुस्तकपाठः ।
(२) पुनरागत्य इति शोतपुस्तकपाठः ।
(३) द्विजः इति शोतपुस्तकपाठः ।

स भुवो मण्डलं सार्धं शतवर्षं द्विजैः सह ।
पालयित्वा हरेर्वेश्म गच्छेत् स्वकुलसंयुतः ॥
तच्चक्रं यो द्विजोऽष्टत्वा बहुभिः कारणैर्विना ।
राजभिः पुण्यकालेषु दत्तं लोभपरायणः ॥
स भवेद्भुवि चाण्डालस्तिलघाती त्रिजन्मसु ।
तस्य वै निष्कृतिः प्रोक्ता[1] कृच्छ्रा[2]त्सान्तपनाच्छतात् ॥

निष्कृतिर्यागादिकर्म कृत्वा एकाहमुपोष्य पञ्चगव्यमेवाऽलं, न प्रायश्चित्तम् ।

तदेवाह,—

शिवधर्मोत्तरे,—

तिलचक्रं द्विजोऽष्टत्वा निष्कारणतया नृप ।
स भवेत्तिलघाती च त्रिषु जन्मसु पापभाक् ॥
कृत्वा शतं सान्तपनं शुद्धोभवति पापतः ।
अन्यथा पापमेवाशु भुक्त्वा नरकमश्नुते ॥
कृच्छ्रं सान्तपनं नाम महापातकनाशनं ।
एतच्छतं द्विजःकृत्वा तस्माद्दोषात्प्रमुच्यते ॥

सान्तपनकृच्छ्रलक्षणं कृच्छ्रप्रकरणेऽभिहितम् ।

इति हेमाद्रौ तिलचक्रप्रतिग्रहप्रायश्चित्तम् ।

---

(१) निष्कृतिर्मोक्षि इति श्रोतपुस्तकपाठः ।
(२) कृच्छ्रसान्तपनात् इति श्रोतपुस्तकपाठः ।

## ( अथेदानीं तिलगर्भप्रतिग्रहप्रायश्चित्तमाह । )

[1]ब्रह्माण्डे,—

ब्राह्मणोब्रह्मसम्पन्नो यमलोकभयातुरः ।
[2]गर्भं तिलमयं क्वाऽपि न गृह्णीयाज्जनाधिपात् ॥
तिलगर्भं द्विजोधृत्वा तिर्य्यग्योनित्वमाप्नुयात् ।
न तस्य पुनरावृत्तिस्तिर्य्यगजन्तोर्नराधिप ॥

नारदीये,—

इहलोके सुखं भुञ्जन् परलोकभयातुरः ।
त्यजेत्तिलमयं गर्भमन्यथा सूकरो भवेत् ॥

विष्णुधर्म्मे,—

निष्कारणं तिलमयं गर्भं [3]धर्त्ता द्विजोयदि ।
अनन्तं नरकं भुक्त्वा तिर्य्यग्योनित्वमाप्नुयात् ॥

देवीपुराणे,—

धृत्वा तिलमयं गर्भं पूर्व्वजः कारणं विना ।
[4]महान्तं दोषमाप्नोति सूकरोभुवि जायते ॥

तिलगर्भप्रायश्चित्तं हिरण्यगर्भप्रायश्चित्तवत्सर्व्वं कुर्य्यात् ।

इति हेमाद्रौ तिलगर्भप्रतिग्रहप्रायश्चित्तम् ।

---

( - ) अयं पाठ वेंखितपुस्तके नोपलब्धः ।

(१) ब्रह्माण्डे इति वेंखितपुस्तके नास्ति ।

(२) तिलगर्भमथवंक्वापि इति क्रीतपुस्तकपाठः ।

(३) धृत्वाइति क्रीतवेंखितपुस्तकपाठः ।

(४) महद्दोषमवाप्नोति इति क्रीतवेंखितपुस्तकपाठः ।

## अथेदानीं कनकप्रतिग्रहप्रायश्चित्तमाह ।

ब्रह्माण्डे—

द्विजोयः पुण्यकालेषु तीर्थेष्वायतनेषु च ।
राजन्या[1]दन्यतोवाऽपि लोभमोहपरायणः ॥
कनकं प्रतिगृह्णीयाद् अणुमात्रमकिञ्चनः ।
स दरिद्रोभवेत् पापो नरकाननुभूय च ॥
पुनः संसृतिमाप्नोति मृतः कर्कोटकः क्रमिः ।

नारदीये—

पुण्यकालेषु तीर्थेषु पुण्येष्वायतनेषु च ।
हिरण्यमणुमात्रं वा द्विजोयदि नराधिपात् ॥
प्रतिगृह्णाति स[2] पापो मृतः कर्कोटकः क्रमिः ।
तस्य वै निष्कृतिः प्रोक्ता[3] चान्द्रायणचतुष्टयात् ॥

भारते—

कनकं प्रतिगृह्णीयाद् द्विजोनिष्कारणान्मुने !
स महानिरयं गत्वा क्रमिः कर्कटसम्भवः ॥
पश्चात्तापसमायुक्तः चान्द्रायणचतुष्टयम् ।
कृत्वा शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरिष्यते ॥

---

(१) राजन्योवान्यतोवापि इति वेष्टितपुस्तकपाठः । राजतोवान्यतोवापि इति क्रीतपुस्तकपाठः ।

(२) प्रतिगृह्णप्रभोः इति क्रीतवेष्टितपुस्तकपाठः ।

(३) निष्कृतिर्नास्ति इति क्रीतवेष्टितपुस्तकपाठः ।

ब्रह्मवैवर्त्ते—

ब्रह्मनाभिसमुद्भूतं [1]सुरवल्लीफलं तथा ।
तद्वदाभाति सर्व्वत्र कनकं तदुदाहृतम् ॥
राज्ञः[2]पापं तदा दग्ध्वा दानकाले विशेद्द्विजम् ।
अतः प्रतिग्रहस्त्याज्यः द्विजैर्लोकेप्सुभिः सदा ॥

कनकप्रमाणं स्तेयादिप्रकरणे द्रष्टव्यम् ।

ब्रह्मवैवर्त्ते—

हिरण्यगर्भसम्भूतं कनकं यः समुद्वहेत्[3] ।
पुण्यकालेषु पुण्येषु तीर्थेषु द्विजवल्लभात् ॥
तस्य वै[4] निष्कृतिर्दृष्टा चान्द्रायणचतुष्टयात् ।
अथवा त्रिः परिक्रम्य क्ष्मां शुद्ध्येत् परितोऽनृप ! ॥

अणुमात्रमितिश्लोके—प्रतिग्रहे कनकस्य यावत्प्रमाणं पूर्व्वमुक्तं तावत् प्रतिग्रहे पापबाहुल्यमित्यर्थः । कनकं शुद्धसुवर्णं खदिराङ्गारवत् दीप्तियुक्तम् । दानाध्याये यावत् प्रमाणमुक्तं तावदित्यर्थः ।

इति हेमाद्रौ कनकप्रतिग्रहप्रायश्चित्तम् ।

---

(१) कारवल्ली इति क्रीतवेर्ॆखितपुस्तकपाठः ।
(२) राजपापं इति क्रीतपुस्तकपाठः ।
(३) सम्वहन् इति क्रीतलेखितपुस्तकपाठः ।
(४) तस्यैव इति क्रीतपुस्तकपाठः ।

## अथ तिलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

मुखजो वा भुजाद्राजन् पुण्यकालेषु पर्व्वसु ।
तिलप्रतिग्रहं कृत्वा निष्कारणमथाऽधमः[1] ॥
महत्पापमवाप्नोति व्रणरोगी स[2] जायते ।

ब्रह्माण्डे—

मधुकैटभयोर्युद्धे मासमेकं निरन्तरम् ।
अत्यन्तग्लानिमापन्नो हरिः स्वेदधरस्तदा ॥
स्वेदबिन्दुसमुत्पन्नास्तिलाराशीकृता[3] बभुः ।
तिलानालोक्य सहसा हरिरेव जगाद ह ॥
शुभान्[4] दत्त्वा तु भुक्त्वा तु हुत्वा वा जनवल्लभः ।
स सर्व्वपापनिर्मुक्तो मामकं लोकमश्नुते ॥
इत्युक्त्वा तान् गृहीत्वाऽऽदौ ददौ मुनिगणाय सः ।
मधुकैटभनामानौ हत्वा वैकुण्ठमाप्तवान् ॥
तदाऽऽरभ्य तिलास्त्वेते लोकेऽस्मिन् सञ्चरन्ति हि ।
तानेतान् मानवो[5] दत्त्वा विष्णुलोकमवाप्नुयात् ॥

---

(१) निष्कारणतया धनी इति क्रीतपुस्तकपाठः ।

(२) प्रजायते इति क्रीतपुस्तकपाठः ।

(३) राशीभवन् तदा इति लेखितपुस्तकपाठः । राशीभवंस्तदा इति क्रीतपुस्तकपाठः ।

(४) शुभान् दत्त्वा वा इति लेखितपुस्तकपाठः ।

(५) वोनरः इति क्रीतलेखितपुस्तकपाठः ।

तस्यैव निष्कृतिरियं कण्ठदघ्नजलेवसन्।
प्रातरारभ्य-सायाह्ने फलभोजनमाचरेत्॥
तद्विष्णोरिति [1]मन्त्रेण मासमात्रेण शुध्यति।

निष्कारणतया तिलान् प्रतिगृह्य पश्चात्तापसमायुक्तः प्रातःकाल-मारभ्य कण्ठदघ्नजले वसन् "तद्विष्णोः परमं पद"मितिमन्त्रमुच्चरन् सायंकाले विरम्य फलाहारं कृत्वा स्वपिति [2]भवेत, एवं मास-त्रयेण[3]शुद्धिमाप्नोति नाऽन्येन। दशमहादानमध्ये तिलदानस्य यावन्तस्तिला विहितास्तावत्परिग्रहे प्रायश्चित्तमिदं वेदितव्यं नाऽल्पस्य।

तदाऽऽह—

ब्रह्मपुराणे—

तिलप्रतिग्रहे विप्रः पश्चात्तापसमन्वितः।
प्रातः स्नात्वा नित्यकर्म समाप्य विधिपूर्व्वकम्॥
उदयाच्चसमाविश्य कण्ठदघ्नजलेवसन्।
तद्विष्णोरितिमन्त्रेण अपचासायमादरात्॥
विरम्य नियतः[4] सम्यक् फलाहारं समाचरेत्।

---

(१) इति वैमुत्वा इति श्रीतपुस्तकपाठः।

(२) भवेत् इति वेंचितपुस्तकपाठः।

(३) मासत्रये इति वेंचितपुस्तकपाठः।

(४) निरपं इति श्रीतवेंचितपुस्तकपाठः।

केवले स्थण्डिले सुप्त्वा स्मरन् नारायणं विभुम् ।
माससात्रेण शुद्धः स्यात् मद्यपिर्वाऽन्य'थाद्विजः ॥

इति हेमाद्रौ तिलदानप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं दासीप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे—

सुरूपां सुस्तनीं सुभ्रूं सुकेशीं शूद्रयोनिजाम् ।
'दासीं द्विजोस्तु गृह्णीयात् भोगार्थं पतितोभवेत् ॥
नित्यं नैमित्तिकं काम्यं सद्यः चरति पापिनः ।
विक्रयेद्यदि तां मूढश्चाण्डालत्वं तदाऽऽप्नुयात्' ॥

लिङ्गपुराणे—

दासीं शूद्रसमुत्पन्नां सर्वालङ्कारभूषिताम् ।
निष्कारणतया गृह्णन् विक्रीणाति रमेत वा' ।
चाण्डालयोनिमाविश्य वसेदाब्रह्मणः पदात् ॥

---

(१) नान्यथा इति क्रीत-लेखितपुस्तकपाठः ।
(२) प्रतिगृह्णाद्द्विजोयदि इति क्रीतलेखितपुस्तकपाठः ।
(३) चाण्डालत्वमवाप्नुयादिति क्रीत लेखितपुस्तकपाठः ।
(४) विक्रयित्वा च तां रमेत् इति क्रीतपुस्तकपाठः ।

भविष्योत्तरे,—

दासीमलङ्कृतां राजन् दत्तां राजभिरादरात्।
प्रतिगृह्य द्विजोयस्तु कारणैर्बहुभिर्विना॥
रमेद्वा विक्रयेद्वाऽपि स चाण्डालोभवेत्तदा।
यावद्ब्रह्मा सृजेद्विश्वं तावच्चाण्डालजन्मता[1]॥

शिवपुराणे,—

दासीमलङ्कृतां यस्तु प्रतिगृह्णाति वै द्विजः[2]।
पश्चात्तापसमायुक्तः प्रधानं स [3]परित्यजेत्॥
यागं कृत्वा व्रतं [4]तीर्त्वा तस्माद्दोषात् प्रमुच्यते।
अन्यथा निष्कृतिर्नास्ति त्रिवर्षं यावभक्षकः॥
केशानां वपनं कृत्वा पुनः संस्कारमाचरेत्।
एवं त्रिवर्षाच्छुध्येत अन्यदानैर्न शुद्धिभाक्॥

ब्रह्मवैवर्त्ते,—

दासीमलङ्कृतां शूद्रीं निष्कारणतया द्विजः।
प्रतिगृह्य पुनः पश्चात्तापेनाऽनेन संयुतः॥
कृत्वा त्रिषवणस्नानं जप्त्वा नारायणाक्षरं।
चतुर्थकालआयाते यवभुक्स्थण्डिले [5]स्वपन्।

---

(१) चाण्डालजन्मसु इति कीतपुस्तकपाठः।
(२) प्रतिगृह्य द्विजाधम इति कीतशोधितपुस्तकपाठः।
(३) सम्परित्यजेत् इति कीतपुस्तकपाठः।
(४) तीर्थं इति कीतपुस्तकपाठः।
(५) यजन् इति कीतशोधितपुस्तकपाठः।

प्रधानं सम्यरित्यज्य वर्षत्रयमतन्द्रितः ।
इह लोके परत्राऽपि शुद्धिमाप्नोति दैहिकीम् ॥

एतत् प्रायश्चित्तं ब्रह्मयागाकरणे वेदितव्यं, तदा पञ्चगव्यमात्रेण शुद्धिः । तयोरभावे प्रायश्चित्तेनाऽनेन शुद्धिमाप्नोति, नाऽन्यदानैरित्यर्थः । सर्पदष्टस्य यथा विषनिवारणमेवौषधं योजनीयं नाऽन्यथा तद्वदत्रापीत्यर्थः ।

इति हेमाद्रौ दासीप्रतिग्रहप्रायश्चित्तम् ।

---

अथेदानीं सोपस्करगृहप्रतिग्रहप्रायश्चित्तमाह—

ब्रह्माण्डे,—

गृहं सोपस्करं राज्ञः[1] प्रतिगृह्य द्विजाधमः ।
अज्ञात्वा तद्वयं भोगाद् [2]व्यालोभवति कानने ॥

स्कन्दे,—

सोपस्करं द्विजोराजन् प्रतिगृह्यैव बाहुजात् ।
यागादिकं न कुर्य्याच्चेद् दन्दशूकोभवेद्वने ॥

---

(१) राज्ञा इति केचित्पुस्तकपाठः ।
(२) व्याली इति क्वातकेचित्पुस्तकपाठः ।
(३) वर्षपूर्व्वं इति काशीपुस्तकपाठः ।
(४) तेन वर्ज्जितेनाल भूतमेतिपाठः क्वातकेचित्पुस्तकयोर्दृष्टः ।

सोपस्करमिति निक्षेपधान्यं पूर्णार्थम्, तेन सहितभाण्डखट्वादि कुशूलमुषलोलूखलकण्डनीदृषदुपलाखलारामकूपगोमहिष्यादिक-मिन्धनादिकञ्च, गृहिणः प्रतिग्रहीतुर्यावत्पूरणं यथा[1] भवति तेन प्रकारेण सहितं गृहं निर्म्माय श्रोत्रियाय दत्त्वा गृहदानफल-माप्नोति, नोपेक्ष्यवहत्तं तावन्मात्रमेवफलं, न ग्रहीतुरपि तावत्पापं, तदाऽऽह—

मार्कण्डेयः,—

सोपस्करं गृहं रम्यं निर्म्माय [2]सुहृद्धं प्रभुः ।
यः प्रयच्छेत् [3]पुण्यकाले श्रोत्रियाय कुटुम्बिने ॥
सप्तजन्मसु [4]राजन् स हरेः प्रीतिकरोभवेत् ।
तद्गृहीत्वा द्विजोलोभाद् विना यागादिकं[5] वृथा ॥
व्ययं कृत्वा च मूढ़ात्मा व्यालीभवति निर्ज्जने ।
तद्दोषपरिहारार्थं वर्षत्रीं वर्षपीड़ितः ॥
मार्त्तण्डोदयमारभ्य क्लिन्नवासा बहिःस्थले ।
जपन् वै वारुणं सूक्तं समूर्द्धन्यस्तपादुकः ॥
मध्याह्ने नित्यकर्म्माणि तथा पूर्व्ववदाचरेत् ।
सायङ्काले फलाहारः स्वपेद् स्थण्डिले व्रती ॥

---

(१) यथेति श्रीतर्कालङ्कारपुस्तकयोर्नास्ति ।
(२) दृढ़वत् इति श्रीतर्कालङ्कारपुस्तकपाठः ।
(३) पुण्यतीर्थे इति श्रीतर्कालङ्कारपुस्तकपाठः ।
(४) राजेन्द्र इति श्रीतर्कालङ्कारपुस्तकपाठः ।
(५) यागादिकमनर्थकं इति श्रीतर्कालङ्कारपुस्तकपाठः ।

वर्षर्तुमेवं नीत्वाऽथ शुद्धिमाप्नोत्यनुत्तमां ।
वाचयं सूक्तं हिरण्यशृङ्गमित्यनुवाकः ।

ब्रह्माण्डे,—

सोपस्करं गृहं विप्रः प्रतिगृह्णाति चेन्नृपात्[1] ।
तस्येह[2] निष्कृतिर्नाऽस्ति सुघोरात्सर्पजन्मतः[3] ॥
वर्षर्त्तौ जलवातार्त्तः क्लिन्नवासा जितेन्द्रियः ।
न्यस्तवाहुः स्रोतमाङ्गे वहिरेव वसन् सदा ॥
जपन् वै वाचयं सूक्तं यावदस्तङ्गतोरविः ।
तदा विरम्य मनसा फलाहारं समाचरेत् ॥
स्थण्डिले च स्वपेद्रात्रौ कृतं पापमनुस्मरन् ।
एवं मासद्वयं नीत्वा गृहदानप्रतिग्रहात् ॥
तस्माद्दोषात् प्रमुक्तःस्या[4]दन्यथा भुजगोभवेत् ।
यागे कृत्ये वा सर्व्वस्वव्ययं कृत्वा न दोषभाक् ॥
प्रधानत्यागमथवा पशुनिक्षेपवर्ज्जितं ।
कृत्वा शुद्धिमवाप्नोति न भुङ्क्ते[5] सर्पजन्म सः ॥

इति हेमाद्रौ गृहदानप्रतिग्रहप्रायश्चित्तम् ।

---

(१) प्रतिगृह्णन्नराधिपात् इति क्षीतखेचितपुस्तकपाठः ।
(२) तस्यैव इति खेचितपुस्तकपाठः ।
(३) सर्पजन्मात्वतोऽन्वप इति क्षीतपुस्तकपाठः । सर्व्वजन्मात्मवान्वप इति खेचित-पुस्तकपाठः ।
(४) चाभूदिति क्षीतखेचितपुस्तकपाठः ।
(५) लभ्येत इति खेचितपुस्तकपाठः ।

## अथ शय्याप्रतिग्रहप्रायश्चित्तमाह ।

मत्स्यपुराणे—

शय्यां सोपस्करां दिव्यां सखट्वां सुखशोभिताम् ।
पुण्यकाले पुण्यतीर्थे राज्ञो[1] गृह्णाति लोभतः ॥
तस्य मृत्युभयं प्रोक्तं षण्मासाभ्यन्तरे यमात् ।
ततः पिशाचतां याति विप्रु जन्मसु गोखरः ।

स्कन्दपुराणे—

एकादश्यां पौर्णमास्यां चन्द्रसूर्यग्रहे द्विजः ।
पुण्यदेशे पुण्यतीर्थे शय्यां चोपस्करान्विताम् ॥
राज्ञः सम्पादयेद्यस्तु तस्य मृत्युभयं भवेत् ।
ततः पिशाचोभवति [2]गोखरत्वमवाप्यते ॥

भविष्योत्तरे—

आषाढशुक्लद्वादश्यां पुण्यतीर्थे नराधिप ।
शय्यां सोपस्करां राज्ञां द्विजोयः सम्परिग्रहेत् ॥
[3]स खरत्वमवाप्नोति मृत्युवक्त्राद्विमोचितः ।
तस्य वै[4] निष्कृतिर्नास्ति तीर्थैर्दानव्रतैरपि ॥

---

(१) राज्ञां यदिह संग्रहादिति श्रीतलेखितपुस्तकपाठः ।

(२) गोखुरत्वमिति श्रीतपुस्तकपाठः ।

(३) नखरत्वं इति लेखितपुस्तकपाठः ।

(४) तस्यैव इति श्रीतपुस्तकपाठः ।

ब्रह्माण्डे—

अयनोत्थानद्वादश्यो:[1] पुण्यकाले नदीतटे ।
सवत्सां दामसंयुक्तां शय्यां यः सम्परिग्रहेत् ॥
षण्मासान्मृत्युमाप्नोति गोघ्नत्वमवाप्यते ।
[2]तस्य वै निष्कृतिर्दृष्टा ब्रह्मणा लोकवर्त्तिना ॥
चतुर्भागव्ययं वाऽपि यागार्थं दक्षिणां वहन् ।
अभाव[3]सम्भवे राजन् शृणु निष्कृतिमुत्तमाम् ॥
वसन्तर्त्तौ जले स्नात्वा चत्वरं समुपाश्रयेत् ।
हस्तमात्रं विलिप्याऽथ गोमयेन सुवर्चसा ॥
उपविश्याऽत्र देवि वै नित्यकर्म समाप्य च ।
माध्याह्निकं ततः कृत्वा पुनः कर्म समाप्य च ॥
मौनी व्रतमुपस्थाय जपेदस्तमयावधि ।
त्रियम्बकं महामन्त्रं न्यासध्यानपुरःसरम् ॥
माध्याह्निकं समाप्याऽथ[4] पुनः कर्म समाचरेत् ।
सायं सन्ध्यामुपासित्वा नित्यहोमं समाप्य च ॥
फलाहारं ततः कृत्वा स्थण्डिले स्वगृहे स्वपेत् ।
ब्रह्मचर्यं व्रतं कुर्वन् हतं पापमनुत्तमम् ॥

---

(१) द्वादश्यां इति क्षोत पुस्तकपाठः ।

(२) तस्यैव इति क्षोतपुस्तकपाठः ।

(३) अभाव सम्भवात् इति लेखितपुस्तकपाठः ।

(४) ततः कृत्वा इति क्षोतलेखितपुस्तकपाठः ।

एवं मासद्वयं नीत्वा शुद्धः स्यात्तत्परिग्रहात्।
अन्यथा दोषमाप्नोति पिशाचत्वं [1]व्रजेदिह॥

सोपस्करामिति शय्यादोलार्थं शृङ्खलाचतुष्टयं हस्तपादनिवेश-नार्थं[2] सूक्ष्मावरणवद्[3] उपबर्हणं सोत्तरच्छदञ्च। एतत् सोपस्करम्। सोपस्करं तल्पं द्विजैर्निष्कारणार्थं लोकेप्सुभिर्न प्रतिग्राह्यम्। उभयोरभावे मधुमाधवमासयोः पूर्वोक्तनिष्कृतिं कृत्वा तत्परि-ग्रहात् शुद्धिमाप्नोतीत्यर्थः।

इति हेमाद्रौ शय्याप्रतिग्रहप्रायश्चित्तम्।

---

## अथेदानीं कन्याप्रतिग्रहप्रायश्चित्तमाह।

देवीपुराणे—

ब्राह्मणो ब्रह्मसम्पन्नो ब्रह्मचर्यपुरस्कृतः।
समुद्वहेत् स्वकुलजां कन्यां ब्राह्मादिषु स्थिताम्॥
तयोः प्रसूतः[4] कुलजः पितृभक्तिपरायणः।
सन्तारेदुभयं लोकं तत्पुत्रः पुण्यवान् द्विज!॥

---

(१) भवेदिह इति क्रीतलेखितपुस्तकपाठः।
(२) निवेशनार्थं इति क्रीतलेखित पुस्तकपाठः।
(३) सूक्ष्मनलवत् इति क्रीतलेखितपुस्तकपाठः।
(४) प्रसूनकुलज इति क्रीतपुस्तकपाठः।

ब्राह्मादिषु त्रिषु विवाहेषु कन्यास्वीकरणे न दोषः ।

तदेवाह ।

नारदीये—

ब्राह्मो दैवस्तथा चाऽऽर्षः प्राजापत्यस्तथासुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमो मतः ॥
तेषां त्रयः प्रशस्ताः स्युः श्रेष्ठाः[1] पञ्च विगर्हिताः ।
तस्माद् ब्राह्मादिषु ब्रह्मन् विवाहः पुण्यलोकदः ॥
एवं द्विजोयः कुरुते स्वपितॄनुद्धरे[2]त्तथा ।
एतत्पुण्यतमं त्यक्त्वा यो विप्रो वाहुजादिषु ॥
कन्यार्थं धनमादाय कामलोभपरायणः ।
तद्द्रव्येण विवाह्यैनां[3] जायते खलु पापभाक् ॥
रतिमात्रं सुखं तत्र सन्ततिर्दातुरेव हि ।
तस्मादेतत्परित्याज्यं द्विजैः सर्व्वैश्च सर्व्वदा ॥

ब्राह्मणव्यतिरिक्तजातिभ्यः कन्यकाधनसंग्रहे दोषमाह ।

कूर्म्मपुराणे,—

शुल्कजोऽन्यत्र जातिभ्यो विवाहार्थं धनं वहन् ।
तेनाऽपूतेन वसुना यदि कन्यां समुद्वहेत् ॥

---

(१) नेष्टाः इति क्रीतपुस्तकपाठः ।
(२) उद्धरेत् इति क्रीतके वतपुस्तकपाठः ।
(३) कन्यां वरिष्ठ इति क्रीतकेऽन्यतपुस्तकपाठः ।

स विप्रः पतितोभूयात् तत्सुताः पतिताः स्मृताः[१]।
तत्पत्नो तत्सुता राजन् वृथा यत्र धनार्ज्जनम्॥
कलौयुगे विशेषेण स्वजातेः[२] सम्परिग्रहः।
तेषु मुख्यतमः प्रोक्तः कली नेच्छन्ति तद्बुधाः[३]॥

ब्रह्मवैवर्त्ते—( कलिवर्ज्ज्यधर्म्मान् प्रक्रम्य )

स्वजाते[४]रन्यजातिभ्योद्विजैः कन्यापरिग्रहः।
दत्तक्षताया: कन्याया: पुनर्दानं परस्य च॥
समुद्रयात्रास्वीकार: कमण्डलुविधारणम्।
दीर्घकालं ब्रह्मचर्य्यं वर्ज्जनीयं[५] कलौयुगे॥
भत: पाणिग्रहार्थं वा नाहरेद्वनमन्यत:।
अपत्यार्थं विवाहश्च यागार्थं धनसंग्रह:॥
ब्राह्मण्यं परलोकार्थं ब्रह्मचर्य्यन्तु मुक्तये।
पातिव्रत्यं कुलार्थन्तु जप: पापप्रणाशने॥
सत्यं धर्म्मप्रतिष्ठार्थं आचार: कुलवृद्धये।
तस्मात्कन्या परित्याज्या विप्रेणाऽन्यकुलोद्भवा॥

---

(१) भवन् इति श्रीतर्कचिन्तपुस्तकपाठः।
(२) स्वजातिः व परिग्रह इति श्रीतर्कचिन्तपुस्तकपाठः।
(३) स्मरन्ति इति श्रीतर्कचिन्तपुस्तकपाठः।
(—) अयं पाठः श्रीतर्कचिन्तपुस्तकयो र्न दृष्टः।
(४) स्वजातिरिति तर्कचिन्तपुस्तकपाठः।
(५) वर्ज्जिता इति श्रीतर्कचिन्तपुस्तकपाठः।

कन्येति कन्यकार्थधनपरिग्रहः तत्परिग्रहे दोषं प्रायश्चित्तञ्चाह ।

कूर्म्मपुराणे,—

> सुतजः पुण्यकालेषु पुण्यदेशेषु पर्व्वसु ।
> जातिभ्रयाहनं कृत्वा उद्वहेत्[1] सुखलिप्सया ॥
> सा पत्नी तत्कुलोद्भूता तत्सन्तानस्तदिष्यते ।
> तद्भर्त्ता च स्वयं लोके यावत्कालं प्रकीर्त्यते[2] ॥
> तत्कुलं तत्पतिः पुत्राः पतिताःस्युर्न संशयः ।
> तस्मैवं वर्ज्जयेत् पत्र विप्रोलोकपरायणः ॥
> कन्यादानं नमस्कारं भोजनं सहभाषणम् ।
> चामन्त्रणं ि ुः श्राद्धे स्वप्नेऽपि च न संस्मरेत् ॥
> प्रायश्चित्तं यदीच्छेत पश्चात्तापसमन्वितः ।
> पत्नीपुत्रान् परित्यज्य प्रायश्चित्तं समाचरेत् ॥

पूर्व्वं[3] यत्पतितप्रायश्चित्तमुक्तं तत्सर्व्वं ज्ञात्वा शुद्धिमाप्नोति नान्यतः ; तत्पुत्राणां तत्पत्न्याश्च प्रायश्चित्तं नेच्छन्ति । पतित-प्रायश्चित्तं सम्यक् ज्ञात्वा स्वकुले कन्यामुद्वाह्य लोकसम्मत्या व्यव-हरेत्, एतत् पापं प्रकटयेत् न गूढयेत्, तदाह ।

---

(१) हाराहै गीतवेष्टितपुस्तकपाठः ।

(२) चर्देदिति ६ क्रोतवेष्टितपुस्तकपाठः ।

(३) वर्णं पतितप्रायश्चित्तमिति क्रोतपुस्तकपाठः ।

नारदः,—

गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥
तस्माद् द्विजः कुलेऽन्यत्र नाहरेद्दारसंग्रहम् ।

इति हेमाद्रौ कन्याप्रतिग्रहप्रायश्चित्तम् ।

---

## अथेदानीं कपिलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

कपिलां वत्ससहितां राज्ञा[1] दत्तामलङ्कृताम् ।
पुण्यकाले च पुण्यर्क्षे द्विजोयः सम्परिग्रहेत् ॥
तस्य[2] वै जन्मवैफल्यं विपिनस्येव चन्द्रिका ।
यावन्ति धेनुरोमाणि तावन्नरकमश्नुते ॥

हरिवंशे,—

कपिलां संग्रहेद् वत्सां द्विजोलोभपरायणः ।
तद्रोमाणीह यावन्ति तावन्नरकमश्नुते ॥

---

(१) राज्ञामिति वेङ्कितपुस्तकपाठः ।
(२) तस्यैव इति श्रीतपुस्तकपाठः ।

मत्स्यपुराणे,—

कपिला ब्रह्मणादत्ता लोकोपकरणादिह ।
राजा दद्याद् द्विजेभ्यश्च देहपापापनुत्तये ॥
इतीरितं तदा वाक्यं मान्धातृप्रमुखैर्नृपैः[1] ।
तां गृहीत्वा द्विजेभ्यश्च दद्युः पापापमोचनीम् ॥
तदाप्रभृत्यसौधेनुर्दातॄणां पुण्यवर्द्धिनी ।
सर्व्वथा पुण्यकालेषु स्वर्गदा धेनुरर्पिता[2] ॥

नारदीये—

कपिलां समलङ्कृत्य सवत्सां विधिपूर्व्वकम् ।
अर्चयित्वा द्विजाग्र्याय यो दद्यात् सोऽपि पुण्यभाक् ॥
तां तु योऽमुखजोधृत्वा यतते[3] द्रव्यसंग्रहे ।
सोऽरण्ये निर्ज्जने देशे गवयोभवति ध्रुवम् ॥
[4]तस्येह निष्कृतिर्नास्ति त्रिषु जन्मसु पार्थिव ।

ब्रह्माण्डपुराणे—

द्विजो गृह्णाति [5]वेदत्तां राज्ञा वत्साम्वितां सतीम् ।
कपिलां द्रव्यवाञ्छ्यात् स भवेत् गवयोवने ॥

---

(१) प्रमुखान्नृपा इति लेखितपुस्तकपाठः ।
(२) धेनुदायिनो इति क्वचिल्लेखितपुस्तकपाठः ।
(३) दत्त्वा तद्द्रव्यसंग्रहे इति क्वचिल्लेखितपुस्तकपाठः ।
(४) तस्यैव इति क्वचिल्लेखितपुस्तकपाठः ।
(५) दत्तां पुण्यकाले इति क्वचिल्लेखितपुस्तकपाठः ।

तस्यैव निष्कृतिरियं दृष्टा मुनिवरोत्तमैः।
गां सवत्सां परित्यज्य तद्द्रव्यं यागपूर्त्तये॥
व्ययं कृत्वा ऋणी वाऽपि न दोषो[1] कपिलाग्रहे।
प्राजापत्यसहस्राणां [2]त्रयेण शुद्धिरीरिता॥
पूर्व्वोक्तेनैव मार्गेण परिषद्विधिपूर्व्वकम्।
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत्॥
आधानी वा भवेत्[3]कुर्य्याद् दर्शपूर्णादिकाः क्रियाः॥
न भवेत्तेन दोषोऽत्र अग्निर्दहति पातकम्॥
प्रायश्चित्तेन पूतात्मा यागमात्रं समाचरेत्।

तदाह—

आपस्तम्बः—

"अग्नीन् आध्यास्ये सर्व्वक्रत्वर्थमिति" वचनबलादाधानदीक्षा मनुसरन् अग्निहोत्रादिकाः क्रियाः समाचरन्[4] सर्व्वपापेभ्योमुक्तो भूया"दिति वेदितव्यम्।

इति हेमाद्रौ कपिलाधेनुप्रतिग्रहप्रायश्चित्तम्।

---

(१) दोष इति लेखितपुस्तकपाठः।
(२) त्रयाणां इति लेखितपुस्तकपाठः।
(३) वोऽपि इति लेखितपुस्तकपाठः।
(४) सुचरन् इति क्रोतलेखितपुस्तकपाठः।

## अथेदानीं पृथिवीप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे—

पृथिवीं भूमिपालेन दत्तां शालीक्षुसम्भवाम् ।
यागार्थमग्निहोत्रार्थं प्रतिगृह्य[1] द्विजोत्तमः ॥
तत्रोद्भवेन धान्येन आधानादिकमाचरेत् ।

आधानानन्तरं दर्शपूर्णमासादिकं कुर्य्यादित्यर्थः ।

ब्रह्माण्डे—

ब्रह्मविद् ब्राह्मणस्तस्माद्[2] भुवं भूपालवल्लभात् ।
प्रतिगृह्याऽग्निहोत्रादीन् अतिथींश्चापि पूजयेत् ॥

मार्कण्डेयपुराणे—

कुटुम्बपालनस्यैव क्रतुर्वा यावती च भूः ।
समाप्तिश्च यथा कार्य्या तावतीं क्ष्मां परिग्रहेत् ॥

महाराजविजये,—

वृद्धौ च मातापितरौ साध्वी भार्य्या सुतः शिशुः ।
सत्क्रियाः क्षयमापन्ना धर्म्मोऽपक्षीयते तदा ॥
तदा प्रतिग्रहोभूमेः विप्रस्यैव न दोषभाक् ।

अशीतिवर्षादूर्द्धं वृद्धः । या नारी स्वप्नेऽपि परं न चिन्तयेत् न सम्भावयेत् पतिपादप्रक्षालनादिकं मनसाऽप्यकुर्वयन्तो प्रत्यहं

---

(१) पृथ्वीमाह्याद्द्विजोत्तमैरिति क्षीतपुस्तकपाठः ।

(२) यस्मात् इति क्षीतखेशितपुस्तकपाठः ।

कुर्य्यात् सा साध्वी। षोड़शवर्षात् पूर्व्वं शिशुः, सत्क्रियाः अग्निष्टोमादयः, धर्म्मो नित्यस्नानादिः। तदा क्ष्मापरिग्रहो विप्रस्य न दोषः, यावत्या भुवा एतेषां परिपूरणं भवति तावद्भूमि-परिग्रहे न दोषः।

विष्णुरहस्ये,—

पितृपत्नीसुतानाञ्च अग्निष्टोमादिकर्म्मणाम्।
[1]संरक्षणाय राजेन्द्र न दोषः क्ष्मापरिग्रहे[2]॥
विनाऽप्येतैर्निमित्तैर्यः पृथिवीं संग्रहेद् द्विजः।
[3]स सभार्य्यः सपुत्रश्च नरके वासमश्नुते॥

मार्कण्डेयपुराणे,—

धान्यं प्रभूतं मुखजस्तथाजातं तथाव्यये।
[4]विक्रीय निजभोगार्थं "भवेयं धनिको" भुवि॥
इत्यहङ्कारतश्चैव चाण्डालत्वमवाप्नुयात्।
निष्कृतिस्तस्य कथिता वसिष्ठेन महात्मना॥
पादत्रयेऽब्दकृच्छ्रं स्यात् तत्त्रैगुण्ये त्रिधा स्मृतम्।
बीजानां प्रस्थमात्राणां प्रसूति[5] र्यावती क्षितिः॥

---

(१) पापसंहरणे राजन् इति क्रीतपुस्तकपाठः—
(२) क्ष्मापरिग्रह इति क्रीतपुस्तकपाठः।
(३) सभार्य्यः पुत्रसहित इति क्रीतलेखितपुस्तकपाठः।
(४) विक्रयित्वात्मभोगार्थं इतिक्रीतलेखितपुस्तकपाठः।
(५) यथाप्तिरिति क्रीतलेखितपुस्तकपाठः।

तस्याः प्रतिग्रहे कार्य्यं मुनिभिः परिकीर्त्तितम् ।
'प्रसूतिर्व्रीहियवीजानां पृथिवी यावती भवेत् ॥
तस्याः परिग्रहे चान्द्रं प्रायश्चित्तं विशोधनम्' ।
स विप्रः शूद्रतां याति वृथा भूमेः परिग्रहात् ॥
( विंशत्यादशभिर्व्रीहियैर्यावती क्ष्मा महीभुजा । दत्ता तस्याग्रहेविप्र-चान्द्रायणशतञ्चरेत् । अतोधिकाया ग्रहणे प्रायश्चित्तं न दृश्यते )
पित्रार्ज्जितं निजं क्षेत्रं राजाक्रान्तं यदा भवेत् ।
आत्मार्ज्जितं वा राजेन्द्र समाक्रान्तं नृपाधमैः ॥
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण पोषणम् ।
जीवनं धर्म्मसिद्धिर्वा अथवा ऋणमोचनम् ।
तावत् प्रतिग्रहे दोषो न भवेदिति निश्चितम् ॥

कूर्म्मपुराणे,—

राजाक्रान्तं जनाक्रान्तं क्षेत्रं पित्राऽर्ज्जितं यदि ।
तदा प्रतिग्रहं कृत्वा यावन्मात्रेण जीवनम् ॥
तावत् प्रतिग्रहेद्विप्रो 'राज्ञस्तस्मान् न दोषभाक् ।

इति हेमाद्रौ पृथिवीप्रतिग्रहप्रायश्चित्तम् ।

---

(१) समाप्तिरिति क्रीतलेखितपुस्तकपाठः ।
(२) न दृश्यते इति लेखितपुस्तकपाठः ।
(—) अयं पाठः लेखितपुस्तकेनोपलब्धः ।
(१) राज्ञातेन इति क्रीतपुस्तकपाठः ।

## अथेदानीं सप्ताचलप्रतिग्रहप्रायश्चित्तं ब्रुवन् कनकाचलप्रतिग्रहप्रायश्चित्तमाह—

तदाह,—

देवीपुराणे,—

अचलं कानकं पुण्यं[1] राज्ञः पुण्यानुवर्त्तिनः ।

द्विजो य इह गृह्णाति स[2]भजेद्वै पिशाचताम् ॥

कनकस्वरूपमाह,—

लिङ्गपुराणे,—

पूतिष्वष्टसु संशुद्धं शोधितं वह्नितापनात् ।

अतीव शुभ्रतां याति कनकं तदुदाहृतम् ॥

पद्मपुराणे,—

कनकाद्रिं द्विजो दत्तं[3] राजभिः पुण्यवर्त्तिभिः ।

[4]प्रतिगृह्णन् हि पुण्याहे सम्भवेत् पिशिताशनः ॥

मार्कण्डेयपुराणे,—

कनकाद्रिं नदीतीरे पुण्यकालेषु राजभिः ।

दत्तं द्विजश्चेद् गृह्णीयात्[5] पिशाचः स्याद्विरूपकः ॥

---

(१) कृत्वा इति केचित्पुस्तकपाठः ।

(२) मोहात्मा इति कतिचित्पुस्तकपाठः ।

(३) कृत्वा इति कतिचित्पुस्तकपाठः ।

(४) पुण्यकालेषु इति केचित्पुस्तकपाठः ।

(५) तत्तद्द्विजोऽनुगृह्णीयादिति केचित्पुस्तकपाठः ।

( नदीषु पुण्यकालेषु पुण्यतीर्थेषु पर्व्वसु ।
कनकाद्रिं द्विजोधृत्वा लोभान्निष्कारणं भुवि ॥
स भवेद्विन्ध्यदेशेषु—पिशाचः कान्तिवर्ज्जितः । )
चतुर्थांशव्ययं कृत्वा यागं वा बहुदक्षिणम् ।
प्रायश्चित्तेन पूतात्मा पुनः संस्कारमाचतः ॥
शुद्धिमाप्नोति लोकेऽस्मिन् भर्हता नित्यकर्मसु ।
भिक्षाटनं वरं नृणां एतस्मात् सम्परिग्रहात् ॥
संसारं वा त्यजेद्विद्वान् सन्यासं वा परिग्रहेत्[1] ।
एवं मुक्तिमवाप्नोति कनकाद्रिं त्यजेदतः ॥

अपरिग्रहस्य विप्रस्य शुद्धा वृत्तिः कथिता ।
उञ्छवृत्तिः शिलवृत्तिः कुम्भवृत्तिः कुशूलता ॥
चतुर्व्वो वृत्तयः प्रोक्ताः कनकाद्रिप्रतिग्रहात् ।

एतासां पूर्व्वोक्तानामभावे कनकाद्रिग्रहे प्रायश्चित्तमाह— मार्कण्डेयपुराणे,—

कनकाद्रिं द्विजोयस्तु गृह्णाति कारणैर्विना[2] ।
स तु शुद्धिमवाप्नोति कृच्छ्रैरयुतसंख्यकैः[4] ॥

कृच्छ्राणि प्राजापत्यानि ।

---

(—) अयं पाठः लेखितपुस्तके नोपलब्धः ।

(१) वा परिग्रहं इति क्रीतलेखितपुस्तकपाठः (

(२) कृत्वा इति क्रीतलेखितपुस्तकपाठः ।

(३) कृत्वा निष्कारणं सुधीः इति क्रीतपुस्तकपाठः ।

(४) कृच्छ्राण्ययुतसंख्यया इति क्रीतलेखितपुस्तकपाठः ।

लिङ्गपुराणे—

> कनकाद्रिं द्विजोऽश्नत्वा राज्ञः पुण्यागमे तथा ।
> अष्टैरयुतसंख्याकैः शुद्धिमाप्नोति नाऽन्यथा ॥ इति ।

इति हेमाद्रौ कनकाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रजताचलप्रतिग्रहप्रायश्चित्तमाह ।

वामनपुराणे—

> राजतं योऽनुगृह्णीयात् (धवलं राजवल्लभात् ।
> पूर्व्वजो भोगमोहात्मा कालपाशवशं गतः ॥
> तत्पापमनुभूयाऽऽशु बलाकः स भवेद्वने ।
> त्रिषु जन्मसु काकः ) स्यात् श्वेतरोगीभवेत्ततः[1] ॥

शिवपुराणे—

> राजभिः पुण्यकालेषु दत्तं योरजताचलम् ।
> विना निमित्तैर्बहुभिः [2]प्रतिगृह्णाति भोगवान् ॥

---

(—) अयं पाठः शीतपुस्तके नास्ति ।

(१) भवेत् तदा इति शीतपुस्तकपाठः ।

(२) प्रतिगृह्णात्यभोगवान् इति शीतपुस्तकपाठः ।

शीघ्रं कालवशं गत्वा दुःखं तत्राऽनुभूय च ।
[1]बलाकः स भवेत्पश्चात् श्वेतरोगी स जायते ॥
( जन्मनवे तु काकः स्यात् तदा मुक्तिर्न जायते । )[2]

स्कन्दपुराणे—

राजतं प्रतिगृह्याऽङ्घ्रिं[3] प्रायश्चित्तपराङ्मुखः ।
[4]बलाकः स भवेत्पश्चात् काकः स्यात् त्रिषु जन्मसु ॥
कथञ्चिन्मुक्तिमापन्नः श्वेतरोगी भवेत्तदा ।

एतदकृतप्रायश्चित्तपरं कृतप्रायश्चित्तस्य न [5]बलाकत्वादि तदेवाह—

गारुड़पुराणे—

प्रायश्चित्तेन पूतस्य द्विजस्याऽस्य शृणुष्व यत् ।
तस्येह न[6] बलाकादिर्दैहिकीशुद्धिरीरिता ॥
प्रायश्चित्तं पुरा कृत्वा धर्म्मशास्त्रोक्तमार्गतः ।

---

(१) बालक इति शीतपुस्तकपाठः ।
२(—) इदमर्द्धं वेचितपुस्तकेनास्ति ।
(३) वर्ज्जं प्रतिगृह्णाती इति शीतवेचितपुस्तकपाठः ।
(४) बालक इति शीतपुस्तकपाठः ।
(५) न बालकादि इति शीतपुस्तकपाठः ।
(६) तस्येन इति शीतवेचितपुस्तकपाठः ।

ततः पश्चात् पुनः कर्म पञ्चगव्यं पिबेत्ततः[1] ॥
एवं पूतस्य विप्रस्य पश्चिमस्य न जायते ।
कनकाचलप्रतिग्रहप्रायश्चित्तादिसमाऽपि निष्कृतिर्नाऽन्यथा ।

इति हेमाद्रौ रजताचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ रत्नाचलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयः—

रत्नाचलं द्विजोऽश्नाति[2] राज्ञः पुरुषागमे तु यः ।
न तस्य पुनरावृत्तिर्नरकाद्ब्रह्मदायिनः ।

ब्रह्माण्डे—

गङ्गातीरेऽथ गौतम्यां कृष्णवेणीनदीतटे ।
श्रीशैले सङ्गमे वाऽपि भीमरथ्यानदीतटे ॥
अहोबले महाक्षेत्रे वेङ्कटनाथस्य सन्निधौ ।
काञ्चीस्थले वेङ्कटाद्रौ श्रीरङ्गे कुम्भकोणके[3] ॥

---

(१) अनन्तरं इति श्रीतवेष्टितपुस्तकपाठः ।

(२) पश्चात् इति श्रीतवेष्टितपुस्तकपाठः ।

(३) कुम्भकर्णके इति वेष्टितकाशीपुस्तकपाठः ।

मथुरायां महाराज चापग्रे गन्धमादने ।
योद्विजोधनलोभेन राज्ञा दत्तानिमान् गिरीन् ॥
[1]गृह्णाति तस्य विप्रस्य पैशाच्यं जायते ।
निष्कारणतया भूप निमज्जन् नरकार्णवे ॥
पैशाचान्ते मर्त्त्यलोके[2] जायते पिटकाकृतिः ॥
तेषां मध्ये तथा राजन् रत्नाचलपरिग्रहात् ।
अरण्ये निर्ज्जले देशे पिशाचोभवति ध्रुवम् ॥

स्कन्दपुराणे,—

ग्रहणे संक्रमे चैव मन्वादिषु युगादिषु ।
अयने द्वितये चैव व्यतीपाते च वैधृतौ ॥
कृष्णाङ्गारचतुर्द्दश्यां अमायां [3]पूर्णिमादिने ।
द्वादश्यां पुष्यनक्षत्रे द्विजोलोभपरायणः ॥
अचलान् राजभिर्दत्तान् [4]प्रतिगृह्य पृथक् पृथक् ।
अकृत्वा [5]निष्कृतीस्तेषां तत्तत्पापविमुक्तये ॥
यमस्य सदनं गत्वा अनुभूय महद्भयम् ।
पिशाचो भवति क्षिप्रमरण्ये निर्ज्जनेऽजले[6] ॥

---

(१) न तृप्तिरिति क्षौतलेखितपुस्तकपाठः ।
(२) मनुलोके इति क्षौतपुस्तकपाठः ।
(३) पौर्णिमादिने इति लेखितपुस्तकपाठः ।
(४) एषु पुण्यदिनेष्विह इति लेखितपुस्तकपाठः । येषु पुण्यदिनेष्विह इति च क्षौतपुस्तक-पाठः ।
(५) निष्कृतिं इति क्षौतपुस्तकपाठः ।
(६) वने इति क्षौतपुस्तकपाठः ।

भविष्योत्तरे,—

रत्नाचलमिमं दृष्ट्वा द्विजोनिष्कारणाशुभे[1]।
अज्ञात्वा निष्कृतिं तस्य मृत्वा नरकमाप्नुयात्॥
[2]पिशाचाशुभवं ज्ञात्वा जायते पिटकाकृतिः।
तस्यैव निष्कृतिरियं ब्रह्मणा परिकल्पिता॥
अरण्यं निर्जनं गत्वा शून्ये देवालये चिरम्।
ज्ञात्वा निभवचक्राणं भवकृष्णाजिनं वहन्॥
मौनव्रतमुपास्थाय वीरासनमुपाश्रितः।
रुद्राध्यायं जपेन्नित्यं तावत्संख्याः समाचरन्॥
यावदस्तं गतोभानुर्विरमेत्तावता जपात्।
अव्रतन्नं पयोवाऽपि अश्नती फलभोजनम्॥
स्वपेच्च स्थण्डिले रात्रौ द्विजस्यैतस्य निष्कृतिः।
एवं ऋतुत्रयं नीत्वा शुद्धिमाप्नोति वैदिकीम्॥
अशक्तौ तद्धनस्यार्द्धं [3]व्रतार्थं व्ययमाचरेत्।
एवमेवनिष्कृतिर्दृष्टा[4]रत्नाचलपरिग्रहात्॥
पुनः संस्कारमात्रेण शुद्धोभवति निश्चितम्। इति

---

(१) दुर्मतिरिति वैचितवाग्नीपुस्तकपाठः।
(२) पिशाचादि भयं ज्ञात्वा इति श्रौतपुस्तकपाठः।
(३) तदर्द्धमिति श्रौतवैचितपुस्तकपाठः।
(४) धूप इति श्रौतवैचितपुस्तकपाठः।

प्रतिग्रहलब्धधनस्य चतुर्थभागेन पूर्व्ववत् प्रायश्चित्तं कृत्वा पुनः-संस्कारकाले ब्रह्मोपदेशं गायत्रीं 'गुरोः सकाशं शुद्धिमाप्नोति, नान्यथा शुद्धिरस्तीत्यर्थः ।

इति हेमाद्रौ रत्नाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ धान्याचलप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

धान्याचलप्रदाता यः पुण्यक्षेत्रेषु पर्व्वसु ।
अर्चयित्वा द्विजाग्र्याय स वै लोकाधिपो भवेत् ॥

[2]कूर्म्मपुराणे,—

अर्चिताय[3] द्विजाग्र्याय धान्याचलमनुत्तमम् ।
अर्च्चितं शास्त्रमार्गेण पुण्य[4]तीर्थेषु पर्व्वसु ॥
यो दद्यात् पृथिवीपालः स गच्छेद् विष्णुमन्दिरम् ॥

---

(१) गुरवा इति ज्ञातलेखितपुस्तकपाठः ।

(२) ज्ञातपुस्तके नास्ति ।

(३) अर्च्चयित्वा इति ज्ञातपुस्तकपाठः ।

(४) कालेषु इति ज्ञातपुस्तकपाठः ।

लिङ्गपुराणे,—

धान्याचलं द्विजोमोहात् गृह्णन् काल उपागते ।
प्रतिग्रहस्तु सूपत्रेऽहात् यक्तत्वा धर्मसंग्रहम् ॥
आरामेष्विक्षुदेशेषु पिशाचोदुम्बरोभवेत् ।
तत्राऽनुभूय नरकं पुनर्मूषिकतां[1] व्रजेत् ॥

स्कन्दपुराणे,—

शृणु वक्ष्ये प्रवक्ष्यामि धान्याचलपरिग्रहे ।
दोषं परिग्रहीतुर्वै राज्ञो धर्मानुवर्त्तिनः ॥
शालिक्षेत्रे वने वाऽपि आरामे वृक्षसङ्कुले ।
पिशाचोदुम्बरोनाम त्रासयन् वै जनान् बहून् ॥
महान्तं नरकं भुक्त्वा यक्तत्वा धर्मनिष्कृतिम् ।
स भवेत् मूषिकः[2] स्थूलस्त्विषु जनस्य संग्रहात् ॥

भविष्योत्तरे,—

धान्याचलं द्विजोधृत्वा कृच्छ्रलोभपरायणः ।
यक्तत्वा निष्कृतिं तस्य स भवेत्पिशिताशनः ॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम् ।
पुनः संस्कारमात्रेण शुद्धिमाप्नोति दैहिकीम् ॥

---

(१) भूषकतां इति श्रीतपुस्तकपाठः ।
(२) मूषकः इति श्रीतपुस्तकपाठः ।

भविष्योत्तरे,—

( धान्याचलस्य मध्यतस्तस्य निष्कृतिरीरिता ।
यागादिकं पुराऽकृत्वा कुर्य्याच्चान्द्रायणत्रयम् ॥
पुनः संस्कारपूतात्मा गायत्री मभ्यसेद्द्विजात् ।
तां पठन् प्रयतोनित्यं वर्त्तयेद्यदि बुद्धिमान् ।
अन्यथा निष्कृतिर्नाऽस्ति पापस्यैतस्य गौरवात् ॥ )

विष्णुपुराणे,—

समाऽचलाः समुद्राश्च निर्म्मिताश्चक्रपाणिना ।
जनानां पापनाशाय अरण्यात्कीर्त्तनादिह ॥
तेषां प्रतिग्रहे राजन् पतितः स्याद्द्विजाधमः ।
अतस्तस्य पुनः कर्म्म मुनिभिः परिकीर्त्तितम् ॥

पुनःकर्म्म पुनःसंस्कार इत्यर्थः ।

इति हेमाद्रौ धान्याचलप्रतिग्रहप्रायश्चित्तम् ।

---

(—) अत्र मोतपुस्तक पाठः ।
"धान्याचलं द्विजोभुक्त्वा द्रव्यलोभपरायणः ।
अकृत्वा निष्कृतिं तस्य च भवेत्पतिताधमः ॥
तद्दोषपरिहारार्थं कृत्वा चान्द्रायणत्रयम् ।
पुनःसंस्कारपूतात्मा गायत्रीमभ्यसेद्द्विजः ॥
तां पठन् प्रयतोनित्यं वर्त्तयेत् च पिप्पलिकान् ।
अन्यथा निष्कृतिर्नास्ति पापस्यैतस्य गौरवात् ॥

## अथ तिलपर्व्वतप्रतिग्रहप्रायश्चित्तमाह ।

नारदीये,—

तिलाचलः कालपुरुषस्तिलधेनुस्तिलास्तथा ।
तिलकृष्णाजिनञ्चैव शकटं सयुगं तथा ॥
एतानि विप्रवर्य्याणां महानरकदानि वै ।
निष्कारणतया राजन् प्रतिगृह्य द्विजाधमः ॥
महान्तं नरकं भुक्त्वा गत्वा स्त्रीजन्म निन्दितम्[1] ।
पश्चात्तापसमायुक्तः प्रायश्चित्तं यदीच्छति ॥
प्रायश्चित्तेन महता[2] पुनः संस्कारमर्हति ।

ब्रह्माण्डे,—

धनलोभेन योविप्रः समादत्ते[3] तिलाचलम् ।
सप्तजन्मसु नारी स्यात् तत्राऽपि विधवा भवेत् ॥
नार्य्येव नरकस्थानं किमन्यैर्बहुभाषितैः ।
वैधव्यसदृशं दुःखं स्त्रीणामन्यन्न विद्यते ।
तत्राऽपि बालवैधव्यं तिलाचलप्रतिग्रहात् ॥

---

(१) महान्तं नरकं गत्वा स्त्रीजन्म तदनन्तरमिति श्रीतपुस्तकपाठः ।
(२) मनसा इति श्रीतवेष्टितपुस्तकपाठः ।
(३) प्रतिगृह्य इति श्रीतवेष्टितपुस्तकपाठः ।

स्कन्दपुराणे,—

पुण्यकालेषु वै[1] पुत्र पुण्यतीर्थेषु पर्व्वसु ।
तिलाचलं द्विजोधृत्वा महान्तं नरकं व्रजेत् ॥
पश्चाद्भवति नारीत्वं सप्तजन्मसु कुत्सितम् ।
वैधव्यदुःखभाग्भूत्वा[2] पश्चात् कण्डूतिमान् भवेत् ॥
अतोद्विजन्मनः पुत्र ! धनिकस्य तिलाचलम् ।
[3]प्रतिग्रह्य भवेद्विप्रोयागादिषु पराङ्मुखः ।
अजागलस्तनमिव तस्य जन्म तदा वृथा ॥

भविष्योत्तरे,—

विप्रस्तिलाचलं धृत्वा भूपालात्[4] पुण्यपर्व्वसु ।
शुद्धोयागादिकं कृत्वा अन्यथा नित्यसूतकी ॥

कूर्म्मपुराणे,—

यावन्तः पर्व्वता राजन् तिलराशीकृता नृभिः ।
तावन्ति पापजालानि ग्रहीतुर्नाऽत्रसंशयः[5] ॥
अतोविप्रवराणाञ्च गर्हणं तत्परिग्रहः ।
यदीच्छेन्मनसा शुद्धिं तिलाचलप्रतिग्रहात् ॥

---

(१) यः इति श्रीतवेचितपुस्तकपाठः ।
(२) वैधव्यं दुःखमाप्नोति इति श्रीतवेचितपुस्तकपाठः ।
(३) लब्ध्वा प्रतिपद्य इति श्रीतवेचितपुस्तकपाठः ।
(४) राजतः इति वेचितपुस्तकपाठः ।
(५) वर्षं शुद्ध न संशय इति श्रीतवेचितपुस्तकपाठः ।

अनुज्ञातोद्विजेन्द्राणां मनसा हरि[1]मुच्चरन् ।
नद्यां समुद्रगामिन्यां प्रातःस्नात्वा यथाविधि ॥
नित्यकर्म्म समाप्याऽथ स्वगृहे देवसन्निधौ ।
स्थण्डिलाग्निं प्रतिष्ठाप्य आज्यभागान्तमाचरेत् ॥
त्र्यम्बकेणैव मन्त्रेण तिलैराज्याभिमिश्रितैः ।
आसायं जुहुयाद्वह्नौ तावत्संख्यां समुद्वहन् ॥
[2]विसृज्य च तदा होमं तमग्निं न त्यजेद्बुधः ।
अग्रतन्नान् तिलान् भुक्त्वा[3] स्वपेद्देवगृहे मुदा ॥
परेद्युः प्रातरुत्थाय पूर्व्ववद्धोममाचरेत् ।
यावत् प्रयुतसंख्या स्यात् तावद्धोमं समापयेत् ॥
उपोष्य रजनीमेकां पुनः संस्कारमाचरेत् ।
एषा विशुद्धिरुदिता तिलानाञ्च प्रतिग्रहे ॥
अन्यथा निष्कृतिर्नाऽस्ति दानैस्तीर्था[4]वगाहनैः । इति

प्रयुतं दशलक्षं, तदुक्तं—

महाभारते—

अयुतं दशसाहस्रं नियुतं लक्षमुच्यते ।
प्रयुतं दशलक्षं स्यात् अर्व्वुदं कोटिरुच्यते ॥ इति ।

---

(१) अर्च्चयन् इति क्रीतपुस्तकपाठः ।
(२) विरम्याथ तदा होमं इति क्रीत पुस्तकपाठः ।
(३) भुक्ता इति लेखितपुस्तकपाठः ।
(४) तीर्था इति लेखितपुस्तकपाठः ।

एतत्प्रायश्चित्तं पूर्व्ववत् स्वधनस्य चतुर्भागव्ययेन कुर्य्यात्, अन्यथा न निष्कृतिः ।

इति हेमाद्रौ तिलाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ कार्पासाचलप्रतिग्रहप्रायश्चित्तमाह ।

मार्कण्डेयपुराणे,—

सबीजकमिकीटाद्यैः शोधितं पुण्यपर्व्वसु ।
कार्पासं द्विजवर्य्याय योदद्यात् सोऽपि मुक्तिभाक् ॥

ब्रह्माण्डे—

कार्पासस्याऽचलं राजा पुण्यदेनेषु पर्व्वसु ।
अर्च्चितं गन्धवस्त्राद्यैः शास्त्रमार्गेण धर्म्मतः ॥
योदद्याद् द्विजवर्य्याय स मुक्तः संसृतेर्भयात् ।
तद्बीजानीह यावन्ति तावत्कालं वसेद्दिवि ॥

कूर्म्मपुराणे,—

कार्पासस्याऽचलं विप्रः प्रतिगृह्य जनाधिपात् ।
सद्यः पतति पुण्यानि तस्य[1] पापानि सन्दिशेत् ॥

---

(१) कर्त्तुः इति श्रीतर्कवाचस्पतिपुस्तकपाठः ।

स विप्रः पतितोभूयाद् आत्मघाती नरेश्वर।
मृतः कालवशं गत्वा काकोलं नरकं व्रजेत्॥
तदन्ते भुवमासाद्य श्वेतरोगी दरिद्रकः[1]।
पत्नीपुत्रपरित्यागी दुःखितः स्यात्पुनः पुनः॥

ब्रह्माण्डपुराणे,—

योविप्रः पुण्यकालेषु गिरिङ्कार्पाससंज्ञितम्।
अर्चितं गन्धवस्त्राद्यैः [2]प्रतिगृह्णाति भूपते॥
अकृत्वा स[3]व्रतं सम्यक् यमपाशवशङ्गतः।
काकोलं नरकं गत्वा श्वेतरोगी भवेद्भुवि।
अथ तद्दोषशान्त्यर्थं प्रायश्चित्तं चरेद्बुधः॥

स्कन्दपुराणे,—

कार्पासस्याचले पुत्र प्रायश्चित्तमिदंशृणु।
पश्चात्तापसमायुक्तः प्राप्याऽनुज्ञां द्विजोत्तमैः॥
विपिनं निर्ज्जनं गत्वा वपनङ्कारयेत्ततः।
तत्र निर्मलजलानं स्नात्वा विष्णुपरायणः॥
नाभिमात्रजले स्थित्वा [4]प्राङ्मुखोदङ्मुखः शुचिः।
पुरुषसूक्तं जपंस्तिष्ठेद् आनक्षत्रोदयात्खले॥

---

(१) दरिद्रवान् इति श्रीतर्कालङ्कारपुस्तकयोः पाठः।
(२) प्रतिग्रह्णन्नराधिपात् इति श्रीतर्कालङ्कारपुस्तकपाठः।
(३) तद्व्रतं इति श्रीतर्कालङ्कारपुस्तकपाठः।
(४) प्राङ्मुखन्वदनः शुचिरिति काशीपुस्तकपाठः।

ततो विरम्य सहसा संख्यां मनसि धारयन् ।
मुष्टिद्वयमितान् सक्तून् भक्षयेद्दुग्धवर्ज्जितम् ॥
स्वपेन्नारायणस्याऽग्रे केवले स्थण्डिले व्रती ।
पुनः परेद्युरुत्थाय पूर्व्ववज्जपमाचरेत् ॥
यथैव पूर्व्ववत्संख्या यावत्कालेन साध्यते ।
तदा विरम्य पूर्व्वद्युरुपोष्य विधिपूर्व्वकम् ॥
पुनः कर्म्म तदा कुर्य्याद् दण्डमौञ्ज्या'जिनं विना ।
एतेनैव विशुद्धिः स्यान्नान्यथा शुद्धिरिष्यते ॥

एतत्प्रायश्चित्ताकरणे पूर्व्वस्वस्वधनस्य चतुर्भाग'व्ययेन प्रायश्चित्तं कुर्य्यात् । तेन शुद्धोभवतीत्यर्थः ।

इति हेमाद्रौ कार्पासाचलप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ लवणाचलप्रतिग्रहप्रायश्चित्तमाह—

मार्कण्डेयपुराणे,—

लवणाचलं नरपतिरादरात् कुरुते यदा ।
पुण्यदेशे पुण्यनदीतटेषु विमलेषु च ॥

---

(१) चतुर्भागेन इति श्रीतर्कचिन्तामणपाठः ।

तदा विप्राय दद्यात् तं ग्रहशीलवते स्वयम् ।
एवं हि तस्य न भूमौ पुनरात्मसमुद्भवः ॥

स्कन्दपुराणे,—

पुरा हिमवतः पार्श्वे कन्यका काचिदप्सराः ।
सुकेशी सुदती सुभ्रूर्हसन्ती सुन्दरस्तनी ॥
विहारार्थं वहिर्गत्वा विचरन्ती महावने ।
तदा तामवलोक्याऽथ रावणोनाम राक्षसः[१] ॥
कामातुरोमोहवशात्[२] हस्तेनाथाह पाणिना ।
हस्तस्पर्शनमात्रेण तस्या[३]भूत्सात्त्विकोदयः ॥
स्तम्भःप्रलापोरोमाञ्चः स्वेदोवैवर्ण्यवेपथू ।
अश्रु वैस्वर्य्यमित्यष्टौ सात्त्विकाः परिकीर्त्तिताः ॥
स्वेदोदकं तदा तस्य नदीभूत्वा[४] प्रवर्त्तते ।
तदा प्रभृत्यसौ सिन्धुर्लावणो भुवि विश्रुतः ॥
सा तदा हिमवत्पार्श्वात् प्रत्येकं सागरङ्गता ।
स्वेदरूप[५] प्रवाहेण पत्नीभावपरिष्कृता ॥
मङ्क्षोपचकार सलिलं लावण्यं लवणाम्भसि ।
तदा प्रभृत्यसौ सिन्धुरुदधे जलसङ्क्रमात् ॥

---

(१) दैत्यराट् इति क्रीतवेचितपुस्तकपाठः ।
(२) तदातन्वीं इति क्रीतवेचितपुस्तकपाठः ।
(३) तदा इति क्रीतवेचितपुस्तकपाठः ।
(४) नदीरूपा इति वेचितपुस्तकपाठः ।
(५) स्वेदरूपा इति क्रीतपुस्तकपाठः ।

अत्यूषरतया राजन् लवणोदधिरीरितः ।
तेनोत्पन्नं तु लवणं दोषाधिकतया मुने ॥
न प्रतिग्रहणं तस्य केचिदिच्छन्ति सूरयः ।
लवणं चाऽणुमात्रं वा प्रतिगृह्णाति चेद्द्विजः[1] ।
तन्निष्कृतिं पराकस्य विन्ध्यदेशे पिशाचता ॥

मार्कण्डेयपुराणे,—

लवणस्याऽचलं धृत्वा राज्ञः पुण्यागमे सकृत् ।
विप्रोयदिह दुष्टात्मा यमपाशवशङ्गतः ॥
महान्तं नरकं भुक्त्वा पिशाचोभवतिध्रुवम् ।
पश्चाद्भुवमुपागम्य खेदाङ्गोजायते सदा ॥

ब्रह्मवैवर्त्ते—

पूर्व्वजस्याचलं धृत्वा लावणं राजवल्लभात् ।
[2]पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद् यमलोकमुपागतः ।
महद्भयं तदा भुक्त्वा पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामेत्य तदन्ते खिन्न[3]देहवान् ।
अतः प्रतिग्रहस्तस्य गर्हितो लोकवर्ज्जितः ॥

---

(१) प्रतिगृह्णाति द्विजोयदि इति श्रीतर्कवाचस्पतिपुस्तकपाठः ।
(२) पुण्यतीर्थेषु पुण्यदेशेषु इति श्रीतपुस्तकपाठः ।
(३) खेदरदेहवान् इति श्रीतर्कवाचस्पतिपुस्तकपाठः ।

शिवपुराणे,—

मुख्यजो बाहुजाद् धृत्वा लावणमचलं भुवि ।
पिशाचत्वं व्रजेत्[1] पश्चात् खेदाक्रोजायते पुनः ॥
तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमिदं द्विजैः ।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः[2] ॥
विप्रानुज्ञामवाप्याऽथ पश्चात्तापसमन्वितः ।
[3]स्नात्वा शुभनदीतोये गत्वा पर्व्वतगह्वरम् ॥
[4]कण्टकप्रचयं धृत्वा स्वमूर्द्धन्यात्मनः सदा ।
तत्र तिष्ठन् जपेदेनं सर्व्वपापापनुत्तये ॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम् ।
आधारं सर्व्वमन्त्राणां यावदस्तं गतोरविः ॥
तदा विरम्य सहसा संख्यां मनसि धारयन् ।
पलद्वयप्रमाणेन पिबेद्गोदुग्धमादरात् ॥
स्वपेन्नारायणस्याऽग्रे स्थण्डिले केवले भुवः ।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमा[5]चरेत् ॥
एवं ऋतुद्वयं कृत्वा नियतं विधिपूर्व्वकम् ।
रुद्राध्यायं पठेद्यद्वा उत विष्णोरनुज्ञया ॥

---

(१) भजेदिति श्रीतर्कचित्तपुस्तकपाठः ।
(२) कथयामि च इति श्रीतपुस्तकपाठः ।
(३) कृत्वा इति श्रीतपुस्तकपाठः ।
(४) कण्टकं वाहरं इति श्रीतपुस्तकपाठः ।
(५) आदरात् इति श्रीतर्कचित्तपुस्तकपाठः ।

एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत् तच्चनस्यार्थं प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नाऽस्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं, सर्व्वमन्त्राणा माकरत्वात् । एवं कृते लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

तदेवाह,—

दशाध्यायं सकृज्जप्त्वा सर्व्वपापैः प्रमुच्यते ।
अत्यशनादतिपानात् [3]तथाचोग्रात् प्रतिग्रहात् । इति ।

अत्यशनं सपिण्डीकरणश्राद्धादिषु निमित्तेष्वज्ञाने भोजनमत्यशनं अतिपानं शूद्रप्रपादिषु पानमतिपानम् । उग्रप्रतिग्रहः शूद्रा-दिभिर्दत्तस्य[1] [2]लवणाचलादेः प्रतिग्रहः । प्रायश्चित्तपक्षे पुनः संस्कारं पूर्व्ववत् कृत्वा शुद्धोभवति नाऽन्यथेति ।

इति हेमाद्रौ लवणाचलप्रतिग्रहप्रायश्चित्तम् ।

---

(१) दत्तस्येति क्रीतवेचितपुस्तकपाठः ।
(२) स्वहस्तान्वितः इति क्रीतपुस्तकपाठः ।
(३) वच चोग्रात् इति क्रीतपुस्तकपाठः ।

## अथ तिलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

देवीपुराणे,—

महापुण्यनदीतीरे व्यतीपाते च वैधृतौ ।
ग्रहणे संक्रमे चैव मन्वादिषु युगादिषु ॥
राज्ञा दत्तां तिलमयीं धेनुं गन्धाक्षतैर्युताम् ।
अर्च्चितां योद्विजोधृत्वा हतोमृत्युवशङ्गतः ॥
[1]सोऽनुभूय महाघोरां वेदनां यमनिर्म्मिताम् ।
पश्चाद् भवति पापात्मा निष्पुत्रो रोगवान् भुवि ॥

कूर्म्मपुराणे—

पुण्यतीर्थेषु[2] पुण्याहे अयने जन्मसम्भवे ।
दत्तां राजभिर्गन्धाद्यैरर्च्चितां तिलरूपिणीम् ॥
योद्विजः प्रतिगृह्याशु[3]न कुर्य्यान्निष्कृतिं शुभाम् ।
तस्यैव[4]मृत्युरायाति अनुभूय महद्भयम् ॥
पश्चात्पापी महान् घोरोनिष्पुत्रो[5]रोगवान् भवेत् ।
तिलाः सन्तीह यावन्तोह्यजिने धेनुवत्सयोः ॥

---

(१) अनुभूय इति क्रीतलेखितपुस्तकपाठः ।
(२) पुण्यकार्य्येषु इति क्रीतपुस्तकपाठः ।
(३) अज्ञात्वा इति क्रीतलेखितपुस्तकपाठः ।
(४) तथैव इति लेखितपुस्तकपाठः ।
(५) दामवान् इति लेखितपुस्तकपाठः । रोषवान् इति क्रीतपुस्तकपाठः ।

तावद्युगसहस्राणि नरके वासमश्नुते[1] ।
तस्येह नित्यकर्म्माणि हरन्ते तत्प्रतिग्रहात् ॥
तस्मात्प्रतिग्रहो धेनोर्निष्कारणतया नृप ।
गर्हितोऽमुत्रजानां हि तस्मादेतत् परित्यजेत् ॥

तत्रैव,—

पूर्व्वोक्तेष्वेषु पुण्येषु दिनेषु पृथिवीपते ।
धेनुं तिलमयीं विप्रो गृह्णीयाद्यदि लोभतः[2] ।
तस्य नित्यञ्च काम्यञ्च इष्टापूर्त्तादिकञ्च यत् ।
सर्व्वं [3]हरति तत्काले दानमन्त्रोऽर्चिये यथा ॥
तस्यैव निष्कृतिरियं कथिता मुनिपुङ्गवैः ।
तद्द्रव्यं सम्परित्याज्यं दक्षिणामाशमुद्दहेत्[4] ॥
आधानं वा क्रतुं वापि कृत्वा सर्व्वस्वदक्षिणम् ।
ततः शुद्धिमवाप्नोति पुनः संस्कारपूर्व्वकम् ।
अन्यथा निष्कृतिर्नाऽस्ति पञ्चचान्द्रायणै[5]र्विना ॥

---

(१) पापमश्नुते इति श्रोतवेष्टितपुस्तकपाठः ।
(२) धेनुं तिलमयीं हुत्वा विप्रोलोभःयतीबी इति श्रोतवेष्टितपुस्तकपाठः ।
(३) तरति इति वेष्टितपुस्तकपाठः ।
(४) व्रजकम् इति श्रोतवेष्टितपुस्तकपाठः ।
(५) पञ्चचान्द्रायणं विना इति श्रोतपुस्तकपाठः ।

स्कान्दपुराणे—

दौर्भाग्यस्य निवृत्त्यर्थं धेनुं तिलमयीं द्विजः ।
गृहीत्वाऽऽधानयागौ[1] च कृत्वा तत्राऽवशेषयेत् ॥
प्रधानं सम्परित्यज्य न दोषस्तत्प्रतिग्रहात् ।
अथवा पञ्चभिश्चान्द्रैः[2] शुद्धिमाप्नोति वैदिकीम् ॥
पुनः संस्कारमात्रेण नित्यकर्मस्वथाऽर्हता ।
उभयं यः परित्यज्य[3] वर्त्तते भोगलोलुपः ॥
स मृत्वा[4] निष्प्रजो भूयात् तिलरोगी महान् भुवि ॥

इति हेमाद्रौ तिलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ घृतधेनुप्रतिग्रहप्रायश्चित्तमाह—

स्कान्दपुराणे,—

धेनुं घृतमयीं दत्तां[5] कृष्णाजिनपरिष्कृताम् ।
स्वर्चितां गन्धवस्त्राद्यैराजभिः पुष्पसत्तमैः ॥

---

(१) अन्याधानस्य यागस्य इति श्रौतवेष्टितपुस्तकपाठः ।
(२) न्यासैः इति श्रौतपुस्तकपाठः ।
(३) परित्यज्य केवलं इति श्रौतपुस्तकपाठः ।
(४) तदन्ते इति श्रौतवेष्टितपुस्तकपाठः ।
(५) मृतां इति श्रौतपुस्तकपाठः ;

वृथा परिग्रहं [1]ज्ञात्वा द्विजोयागादिभिर्विना ।
यमलोकमुपागम्य कुम्भीपाके निमज्जति ॥
तदन्ते भुवमासाद्य दैववोजायते भुवि ।
अतोमहादोषभयात् परित्याज्या[2] द्विजन्मभिः ॥

लिङ्गपुराणे—

धेनुमेकां द्विजोराजन् अजिने घृतनिर्म्मिताम् ।
सवत्सां घृतधेनुं[3] यो निष्कारणतया वहेत्[4] ॥
कुम्भीपाके निमज्जेत्स[5] पीड़ितोयमकिङ्करैः ।
तदन्ते पृथिवीमेत्य वैष्णवानां कुलोद्भवः ॥
हीनजातिषु सर्व्वासु भूत्वा भूत्वा न निष्कृतिः ।
यागादिकं न कुर्य्याच्चेद्[6] एतस्मान्न विमुच्यते ॥

गारुड़पुराणे,—

कृष्णाजिनेषु पुण्येषु निर्म्मितां घृतरूपिणीम् ।
प्रदत्तां[7] राजपुरुषैर्धेनुं यो मुखजोवहेत्[8] ॥

---

(१) त्यक्त्वा इति क्षीतलेखितपुस्तकपाठः ।
(२) परित्यागः इति क्षीतपुस्तकपाठः ।
(३) घृतधेनुं वत्सेन इति क्षीतपुस्तकपाठः ।
(४) वहेत् इति लिखितपुस्तकपाठः ।
(५) निरच्छ्राय इति लेखितपुस्तकपाठः । तच्छ्राय इति क्षीत-पुस्तकपाठः ।
(६) अज्ञात्वाचेत् इति लेखितपुस्तकपाठः ।
(७) पूजितां इति क्षीत-पुस्तकपाठः ।
(८) वहन् इति लेखितपुस्तकपाठः ।

तस्यैव नरकोघोरः कुम्भीपाकः समुज्ज्वलन्।
तत्र भुक्त्वा पुनः पापी प्राप्य वैश्वजन्मताम्॥
नानायोनिषु सम्भूयाद् यागादिषु पराङ्मुखः।
पश्चात्तापसमायुक्तः प्रायश्चित्ती भवेत्ततः॥

तत्र प्रायश्चित्तमाह—

ब्रह्माण्डे,—

घृतधेनुं राजदत्तां खर्चितां वस्त्रभूषणैः।
पुण्यकालेषु पुण्याहे प्रतिगृह्णाति चेद्द्विजः[१]॥
द्रव्यलोभपरीतात्मा प्रायश्चित्तमिदञ्चरेत्।
नदीषु पुण्यतीर्थेषु स्नातः प्रातर्यथाविधि॥
स्वगृहं पुनरागत्य स्वगृह्याग्नौ विशुद्धये।
अग्नीन्धनादिकं कृत्वा चाज्यभागान्तमाचरेत्॥
तस्मिन्नग्नौ सपत्नीकः कुशाण्डै[२] र्जुहुयाद्घृतम्।
तदर्द्धं गणहोमञ्च कृत्वा शुद्धिमवाप्नुयात्॥
निराहारस्तदा तिष्ठेत् पयोवा धेनुसम्भवम्।
अधःशायी पिवेत्तत्र[३] पत्नीपुत्रविवर्जितः॥
एवं व्रती दिनं कुर्य्यात् संख्यां यावत् समाप्य च।
तदन्ते भोजयेद् गव्यं होमशेषं विशुद्धये॥

---

(१) प्रतिगृह्णाति द्विजोयदि इति श्रीतवेंकितपुस्तकपाठः।
(२) कुष्माण्डं इति श्रीतपुस्तकपाठः।
(३) भवेत्तत्र इति वेंकितपुस्तकपाठः।

ब्राह्मणान् भोजयेत् पश्चात् परिक्रम्य प्रणम्य च ।
स्वयञ्च पारणं कुर्य्यात् पत्नीपुत्रसमन्वितः ॥
एवं कृत्वा द्विजः शुध्येद[1]न्यथा पातकी भवेत् ।

एतदाचरणेऽसमर्थः स्वधनार्द्धार्द्धभागेन पूर्व्ववत् प्रायश्चित्तं कृत्वा शुद्धिमाप्नोति ।

इति हेमाद्रौ घृतधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ जलधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कन्दपुराणे,—

शृणु दोषान्[2] प्रवक्ष्यामि जलधेनुप्रतिग्रहे ।
अमायां सर्व्वसंक्रान्तौ द्वादशीपूर्णिमादिने[3] ॥
महापर्व्वसु पुण्येषु तथा पुण्यालयेषु च ।
कृष्णाजिनेन निर्म्माय धेनुं जलमयीं शुभाम् ॥
अर्च्चितां ब्रह्मरूपाद्यैः धर्म्ममार्गेण राजभिः ।
दत्तां गृहीत्वा योविप्रो[4] द्रव्यलोभपरायणः ॥

---

(१) शुद्ध इति श्रीतर्केश्चितपुस्तकपाठः ।
(२) वत्स इति श्रीतर्केश्चितपुस्तकपाठः ।
(३) पौर्णमीदिने इति केश्चितपुस्तकपाठः ।
(४) द्विजोद्दयाद्याढ़ो इति केश्चितपुस्तकपाठः ।

आत्मनःपरलोकार्थं न [1]कुर्य्यान्निष्कृतिं यदि ।
सोऽनुभूय महत्पापं यमलोके तदाज्ञया ॥
पुनर्भूभागमासाद्य जायते कच्छपोमहान् ।
ततःप्रतिग्रहोदोषः पूर्व्वजानामिहाऽन्यतः ॥

कूर्म्मपुराणे,—

धृत्वा जलमयीं धेनुं द्विजोभोगपरायणः ।
अर्च्चितां प्रभुभिर्दत्तां[2] शास्त्रपूतेन वर्त्मना ॥
यागादिकं पराकृत्य पराकृत्य च निष्कृतिम् ।
पुण्यतीर्थे पुण्यदेशे पुण्यकालेषु पर्व्वसु ॥
निष्कारणतया लोभाद्यमलोकमुपागतः ।
महद्भयं तदा भुक्ता पुनर्भुवमुपाविशन् ॥
पिशाचजन्मतामेत्य जायते[3] खेददेहवान् ।
अतः प्रतिग्रहस्तस्य गर्हितोलोकवर्ज्जितः ॥

[ शिवपुराणे,—

मुखजो बाहुजाद्धृत्वा लावण्यमचलं भुवि ।
पिशाचत्वं मृतोयाति[4] खेदाज्जायते पुनः ॥

(१) अकृत्वा इति श्रीतबेङ्कितपुस्तकपाठः ।
(२) पूतां इति श्रीतपुस्तकपाठः ।
(३) तदन्ते इति श्रीतबेङ्कितपुस्तकपाठः ।
(४) अवेसक्ष इति बेङ्कितपुस्तकपाठः ।

तस्य पापविशुद्ध्यर्थं प्रायश्चित्तमिदं द्विजैः ।
दर्शितं लोकरक्षार्थं तदहं कथयामि वः ॥
विप्रानुज्ञामवाप्याऽऽशु पश्चात्तापसमन्वितः ।
स्नात्वा शुद्धनदीतोये गत्वा पर्व्वतगह्वरम् ॥
कण्टकैर्मुकुटं कृत्वा स्वमूर्द्धन्यात्मनः सदा ।
तिष्ठन् तत्र जपेदेनं सर्व्वपापापनुत्तये ॥
नारायणं हृदा ध्यायन् सर्व्वपापप्रणाशनम् ।
आधारं सर्व्वमन्त्राणां यावदस्तं गतो रविः ॥
तदा विरम्य सहसा संख्यां मनसि धारयन् ।
पलद्वयप्रमाणेन पिबेद्गोदुग्धमादरात् ॥
स्वपन्नारायणस्याऽग्रे स्थण्डिले केवले भुवि ।
ततः परेद्युरुत्थाय पूर्व्ववज्जपमादरात् ॥
एवं ऋतुद्वयं कृत्वा नियुतं विधिपूर्व्वकम् ।
रुद्राध्यायं पठेत् यद्वा उत विष्णोरनुज्ञया ॥
एतद्द्वयोरभावेऽपि प्रायश्चित्तं समाचरेत् ।
पूर्व्ववत्तज्जनार्द्धेहि प्रायश्चित्तं विशुद्धिदम् ॥
अन्यथा निष्कृतिर्नास्ति लवणाचलसंग्रहे ।

नियुतं नमकचमकौ, आरण्यदशमाध्यायो नारायणं सर्व्वमन्त्राणां आकरकत्वात् । एवं लवणाचलप्रतिग्रहपापनिवृत्तिर्भवति ।

दशाध्यायं सकृत् जप्त्वा सर्व्वपापैः प्रमुच्यते ।

तदेवाह,—

अत्यशनादतिपानात् तथा चौर्य्यात्प्रतिग्रहात्

दम्भाद्वा वा यदि वा मोहात् पराकृत्यैव निष्कृतिं
स्थित्वा क्षारोदके कूपे तदन्ते भुवमाविशन् ॥
अगाधे जायते कूर्म्मो ह्रदे जलपरिष्कृते ।
एतद्दोषोपशान्त्यर्थं प्रायश्चित्तं समाचरेत् ॥
(महापाप) भयाद्भूप त्याज्योविप्रैः प्रतिग्रहः ]* ।

मत्स्यपुराणे,—

प्रतिगृह्य द्विजो मोहाद् धेनुं जलमयीं नृपात् ।
यागादिकं स्वशुद्धिं वा अकृत्वा भोगलोलुपः ॥
यमलोके महाघोरे तीर्त्वा क्षारोदकं बलात् ।
तदन्तेऽत्र समागत्य जायते कच्छपोजले ॥
एतद्दोषोपशान्त्यर्थं त्याज्योविप्रैः प्रतिग्रहः ।
गण्डक्यां वाऽथ गौतम्यां कृष्णवेण्यां नदीजले ।
कावेर्य्यां तुङ्गभद्रायां चापाग्रे गन्धमादने ॥
चात्मनः सम्मतं तीर्थं यद्देतेषु च[1] सम्भवेत् ।
अनुज्ञाप्य द्विजैः साकं गत्वा तत्र यतात्मवान्[2] ॥
निमित्तं कीर्त्तयित्वाऽथ स्नायाच्छीघ्रमागतः ।
त्रिसहस्रं च त्रिशतं विंशत्युत्तरमेव च ॥

---

* [ ] एषः पाठः क्षौतकाशीपुस्तकयोर्नोपलब्धः ।
(१) पूर्व्वोक्तेष्वेषु सम्भवं इति लेखितपुस्तकपाठः ।
(२) गत्वा पुण्योदके तथा इति लेखितपुस्तकपाठः ।

एतत् कुर्य्याद्विशुद्धात्मा परिषत्सन्निधौ मुदा ।
एतत्पापविशुद्ध्यर्थं प्रायश्चित्तं द्विजन्मनाम् ॥
नाऽन्यथा शुद्धिमाप्नोति जलधेनुप्रतिग्रहात् ।

परिषत्सन्निधौ यथाशास्त्रं पूर्व्ववत् कृत्वा पश्चात् स्नानादिकं कृत्वा पञ्चगव्यं पीत्वा ब्राह्मणान् भोजयेत् ।

इति हेमाद्रौ जलधेनुप्रतिग्रहप्रायश्चित्तम् ।

---

## अथ क्षीरधेनुप्रतिग्रहप्रायश्चित्तमाह ।

स्कान्दपुराणे,—

पुरा षण्मुख क्षीराब्धौ रमा जाता सधेनुका ।
सवत्सा क्षीरसम्पन्ना सर्व्वावयवसुन्दरी ॥
पोषयामास जलधिर्दुग्धधेनुं सवत्सकाम् ।
पुरुषोत्तमाय लक्ष्मीं तां प्रददौ सर्व्वसाक्षिणे ॥
न[1] प्रायच्छत्स तां धेनुं पुत्रीवात्सल्यगौरवात् ।
ययाचे [2]जलधिं धेनुं हरश्चा पापमोचने ॥

---

(१) स प्रायच्छत् इति क्रीतवेङ्कितपुस्तकपाठः ।

(२) जलधिः इति क्रीतपुस्तकपाठः ।

तथेति प्रददौ सिन्धुर्दुग्धधेनुं स पुत्रिणीम्[1] ।
(दापयामास विप्राय ब्रह्महत्याविमोचनीम् ।)
तां दुग्धधेनुमादाय पुनः प्रायात् स्वमालयम् ॥
धिषणाय स वृत्तान्तं कथयामास देवराट् ।
पुण्यकाल उपायाते दुग्धधेनुं सुरूपिणीम् ॥
दापयामास विप्राय ब्रह्महत्याविमोचने ।
तदा प्रभृत्यसौ धेनुर्ब्रह्महत्याविनाशिनी ॥
ददाति योनृपो[2] धेनुमर्च्चितां कृष्णचर्म्मणि ।
सर्व्वपापविनिर्म्मुक्तो विष्णुलोकं प्रयाति सः[3] ॥
योविप्रः स्वर्च्चितां धेनुं ब्रह्महत्याघमोचनीम् ।
रमासहोदरां[4] सिन्धुनिर्म्मितां दुग्धरूपिणीम् ॥
प्रतिगृह्णाति वै लोभात् सम्प्राप्ते पुण्यपर्व्वणि ।
स कालवशमापन्नस्त्वनुभूय महद्भयम् ॥
तदन्ते भुवमासाद्य मृतदारोभवेद्भुवि ॥

देवीपुराणे,—

पुण्यकालेषु पुण्यर्क्षे पुण्यतीर्थे जनाधिप ! ।
योराजा स्वर्च्चितां धेनुं निर्म्मितां दुग्धरूपिणीम् ॥

---

(१) ददौ तस्मिन् स्त्रीशापघ्नं इति केचित्पुस्तकपाठः ।
( ) इदमर्द्धं केचित्पुस्तके नास्ति ।
(२) राजा यः प्रददौ इति केचित्पुस्तकपाठः ।
(३) अवाप्यते इति कोतकेचित्पुस्तकपाठः ।
(४) तथेति प्रददौ इति केचित्पुस्तकपाठः ।

